


॥ श्रीकृष्णाय नमः ॥

॥ ॐ [1]यज्ञपुरुषाय नमः ॥

# कात्यायनश्रौतसूत्रम् ।

## अग्निचित्सम्राट्स्थपितमहायाज्ञिकश्रीदेवविरचित-भाष्योपबृंहितम् ।[2]

अग्निहोत्रं तथा दर्शः पूर्णमासः पशुस्तथा ।
चातुर्मास्यानि सोमश्च क्रमात्पञ्चविधो हरिः ॥१॥

(श्रीमद्वल्लभाचार्याः)



ब्रह्माणमथ विष्णुं च शिवं गणपतिं तथा ।
अम्बिकां शारदां चापि वन्दे विघ्नोपशान्तये ॥१॥
कात्यायनं नमस्कृत्य गुरून् श्रीश्रीपतींस्तथा ।
पितरौ भाष्यकर्तॄंश्च पितृभूत्यादिसंज्ञकान् ॥२॥
कात्यायनप्रणीतेऽस्मिन्सूत्रे यज्ञप्रकाशके ।
प्रजापतेस्तनूजोऽहङ्कुर्वे व्याख्यामिमां स्फुटाम् ॥३॥
जयन्ति ते गुरोर्वन्द्याः श्रीपतेः पादपांसवः ।
येषां प्रसादादज्ञोऽपि चापलं कर्तुमुद्यतः ॥४॥
आलोच्य सूत्रभाष्यादि क्रियते सङ्ग्रहो यतः ।
स्वकल्पितत्वशङ्कात्र न कार्या विबुधैरतः ॥५॥

(अधिकारनिरूपणप्रतिज्ञा)

इह "पुण्यो वै पुण्येन कर्मणा भवति" "तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेन" इति, "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिभिर्वाक्यैः कर्मणां स्वर्गापवर्गादिश्रेयःसाधनत्वं प्रतीयते। तानि होत्रं जुहुयादित्यग्निहोत्रादिकर्माणि वेदवाक्यैकवेद्यानि, वेदवाक्यानि

१ "यज्ञो वै विष्णुः" इतिश्रुतेः ।

२ "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इतिलक्षणलक्षितम् । वाक्येऽतिव्याप्तिवारणाय सूत्रानुसारिभिरिति । वृत्तावतिव्याप्तिवारणाय स्वपदानीति ।

चानेकशाखावस्थिततया, स्वतश्च प्रतिवाक्यं नानाविधपरस्परविरुद्धार्थस्फुरणेन दुर्बोधार्थानि, बहुभिरर्थवादवाक्यैर्मिश्रितानि च । तथाहि—"अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यत्र किं स्वर्गो होमाय उत होमः स्वर्गाय ? तथा अग्निहोत्रशब्दो गुणविधानार्थो नामधेयं वेति ? तथा "स वै संवत्सरं दीक्षाभिरेति" इत्यादौ क्वचित्संवत्सरशब्दस्य मुख्यार्थत्वम् । सहस्रसंवत्सरादौ तस्यैव गुणत्वम् । अर्थवादमिश्रपाठाद्विध्यर्थवादसन्देहोऽपि भवति, किमयं विधिरुतार्थवाद इति । यद्यपि जैमिनिशबरस्वामिकुमारिलप्रभृतिभिर्मीमांसायां तानि वाक्यानि सन्देहनिरासपूर्वकं यथार्थंव्याख्यातानि सन्ति । अधीतशास्त्राणां च तदर्थाऽवगमोऽपि सुकर एव । तथापि तेषां नानाशाखाव्यवस्थितत्वेनेदानींतनैः सर्वैः पुरुषैरध्येतुं ज्ञातुं चाशक्यत्वादधीतानां कर्मणां ज्ञानं दुःकरमिदानीं तन्माभूदिति मत्वा, परमकारुणिको भगवान् कात्यायनाचार्यो नानाशाखागतविधिवाक्यसङ्ग्रहरूपं कल्पसूत्रं प्रणीतवान् । तत्र पूर्वमधिकारादिकस्य सर्वकर्मसाधारणस्य निरूपणानन्तरं, विशेषस्य दर्शपौर्णमासादेर्निरूपणं युक्तम् । अन्यथा, प्रतिविशेषं, अधिकारादिनिरूपणे ग्रन्थगौरवं स्यात् । तन्माभूदिति कृत्वा, प्रथमेऽध्याये यावत्किञ्चित्सर्वकर्मसाधारणं, तदुपदिशति, तत्रैतदादिमं सूत्रम्[१]—

## अथातोऽधिकारः ॥ १ । १ । १ ॥

वक्ष्यत[२] इति सूत्रशेषः । तत्रायमथशब्दो मङ्गलार्थ आनन्तर्यार्थश्च । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरोक्तेः । तत्र मङ्गलमुच्चारणमात्रेण[३] भवति दधिदर्शनादिवदिति । आनन्तर्यन्तु अभिधावृत्त्या वक्ति । तेनान्यायश्चानेककार्यत्वमिति दोषानवकाशः। अपेक्षितं च प्रारीप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तये प्रचयगमनाय मङ्गलम् । आनन्तर्यं च न, यतः, कुतश्चित्, आनन्तर्यायोगात्, किन्तु वेदाध्ययनापेक्षया, तस्यात्रापेक्षितत्वात् । अतः शब्दोऽत्र[४] हेत्वर्थस्यैव वेदाध्ययन-

---

१ "स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् । अस्तोभमनवद्यं च, सूत्रं सूत्रविदो विदुः" इति, "लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः" इति च तल्लक्षणम् । २ व्याख्यास्यत इति सूत्रशेष इति कर्काचार्याः ३ "ओङ्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इत्युक्तेः । मङ्गलमुच्चारण मात्रेण मृदङ्गध्वनिवत् । ४ अतः शब्दस्तदेव वेदाध्ययनं हेतुत्वेन प्रदर्शयतीति कर्कः ।

स्य वेदार्थविचारं प्रति हेतुतामाह । अधिक्रियत इत्यधिकारः । स्वाम्यं फलभोक्तृतया कर्मणि ऐश्वर्यमित्यर्थः । तेनायमर्थः–अथ वेदाध्ययनानन्तरम्, यतोऽधीतो वेदः, अतो हेतोरधिकारो वक्ष्यते अभिधास्यते, विचारपूर्वकं निरूपयिष्यत इत्यर्थः। अधिकारग्रहणं सर्वेषां वेदवाक्यप्रतिपद्यानामर्थानामुपलक्षणार्थम् । अधिकारादिकः सर्वो पि वेदवाक्यार्थोऽभिधास्यत इत्यर्थः । प्रतिज्ञा[1]सूत्रमेतत् । प्रतिज्ञायत इदम्, अधिकारो वक्ष्यत इति । प्रतिज्ञाकरणं शिष्यबुद्धेरव्याकुलतार्थम् । अन्यथा हि किमिदमुच्यत इति बुद्धेर्व्याकुलता भवति ।

केचि[2]त्त्वेवं व्याचक्षते अयमध्यायः सूत्रकृता नित्यकाम्यप्रायश्चित्तोपदेशानन्तरमुपनिबद्धः । तेनाथशब्दः सर्वकर्मोपबन्धनानन्तर्ये । अतःशब्दस्तु हेत्वर्थ एव । यतो दर्शपूर्णमासादीनि प्रवर्ग्यान्तानि कर्माण्युक्तानि, अतस्तेष्वेव कर्मस्वधिकार उच्यते । एषु पूर्वोक्तेषु कर्मसु अस्याधिकारः, अस्य स्वामित्वं, अस्य कर्मजन्यफलभोक्तृत्वमिति वक्ष्यत इत्यर्थः । यत उक्तेष्वेव कर्मसु एवमपेक्षाजायते, एतेष्वग्निहोत्रादिकर्मसु कस्याधिकार इति । अत एवं प्रतिज्ञा । अथ सर्वकर्मोपनिबन्धनानन्तरं, यतः कर्माण्युक्तानि, अतस्तेष्वधिकारो विधीयत इति । अधिकारो वक्ष्यत इति प्रतिज्ञातम् । कर्मजन्यफलभोक्तृत्वंचाधिकर इत्युक्तम् ॥१॥

---

( स्वर्गपदार्थविवेचनम् )

तच्च कर्मणां फलवत्वे सिद्धे सति सिध्यति, नान्यथा । तेन तत्साधनार्थमिदं सूत्रं प्रारभ्यते । तत्रैवं सन्देहः । किमफलवन्तिकर्माणि, उत फलवन्तीति । अफलवन्तीति ब्रूमः । कुतः? कर्मसमन्तरं प्रत्यक्षेण फलस्यानुपलब्धेः । ननु माभूत्प्रत्यक्षं कर्मणां फलवत्वे प्रमाणम्, आगमस्तुभविष्यति । कश्चासौ " अग्निहोत्रं जुहुयात्स्वर्गकामः " " दर्शपूर्णमासाभ्यां स्वर्गकामोयजेत "इत्यादि । सत्यं भविष्यति । तथापि, अत्रैतद्विचारार्हम् । अत्राग्निहोत्रादिषु किं पुरुषस्याधिकारः, स्वाम्यं, कर्मजन्यफलभोक्तृत्वमस्तिनवेति ? तदर्थमिदं विचार्यते । यजेत जुहुयादित्यत्रयेयं प्रत्ययोपात्ता भावना तस्यां किं धात्वर्थ एव भावः प्रधानं यागं कुर्यात्, होमं कुर्यादित्येवम्, स्वर्गादि तु तत्साधनतया गुणभूतम्, स्वर्गेण यागं च होमं च कुर्यादिति । उत काम्यमानत्वेनो-

---

१ कर्तव्यार्थनिर्देशः प्रतिज्ञा । २ कर्काचार्यात्पूर्वतनाः ।

पात्तः स्वर्गादिरेव भाव्यस्तत्र च साधनं धात्वर्थं इति। यागेन होमेन स्वर्गं कुर्यादिति । ततोऽप्येतद्विचार्यते। योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः सम्बन्धः, तत्र किं क्रिया प्रधानभूता, पुरुषो गुणभूतः अथवा पुरुषः प्रधानभूतः, क्रियागुणभूतेति ? यदि गुणभूतः पुरुषस्तस्य गुणभावं क्रियाक्षेपादेव सिद्धमनूद्य स्वर्गादिद्रव्यं साधनेत्वेन विधीयते। कामश्रुतिश्च साधनकामनानुवादः।

अयमर्थः—स्वर्गसाधनत्वेन कामयमानो यजेत स्वर्गेण यागं कुर्यादित्यर्थः। अथवा, "समुद्रं मनसा ध्यायन् रथन्तरं गायेत्" इतिवत्स्वर्गकामनैव गुणभूतकर्तृविशेषणे सती यागाङ्गत्वेन विधियत इति द्वेधा पूर्वः पक्षः। अथवा, प्रधानभूतः पुरुषः, ततस्तस्यात्मार्थ्या स्वर्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते। साधनतया च याग उपदिश्यते। स्वर्गकामो यागेन कुर्यादात्मार्थं प्रवृत्तिमिति। स्वर्गकामस्य चात्मार्था प्रवृत्तिः स्वर्गविषयैवेति । स्वर्गभावनैवानेन प्रकारेणोपदिष्टा भवति। तदयमर्थः- यः स्वर्गं प्राप्तुमिच्छति स यागेन कुर्यादभिलषितम्, स्वर्गश्च तस्याभिलषित इति, स्वर्गं भावयेद्यागेनेत्युक्तं भवति। तथा स्वर्गशब्दः स्रक्चन्दनवनितादिद्रव्यवाची, सुखवाची वेति ? यदि द्रव्यवाची, ततः कर्मप्रधानम्, द्रव्यं गुणभूतम्। अथ सुखवाची, तदा यागो गुणभूतः, स्वर्गः प्रधानमिति।

तत्रपूर्वः पक्षः। अत्र यजेत जुहुयादित्यनेनाख्यातेन भावनाऽभिधीयते। तस्यां च धात्वर्थ एव भाव्यः, एकपदोपात्तत्वात्। स्वर्गस्तु पदान्तरोपात्तत्वाद्वाक्येन भाव्यतया ज्ञातव्यः॥ * वाक्यं च श्रुतेर्दुर्बलम्। स्वर्गस्य भाव्यत्वाभावे सति गुणत्वमङ्गीकार्यम। स्वर्गशब्दश्चात्र सुखसाधनचन्दनादिद्रव्यवाची। "चन्दनं स्वर्गो, व्युष्टवर्षाः स्त्रियः स्वर्गः, कौशिकानि सूक्ष्माणि वासांसि

---

* "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इतितार्तीयमधिकरणमत्रानुसन्धेमम्। निरपेक्षरवः श्रुतिः। सामर्थ्यं लिङ्गम् 'समार्थ्यं सर्वभावनां लिङ्गमित्यभिधीयते' इति। समभिव्याहारो वाक्यम्, समभिव्याहारो नाम साध्यत्वादिचावकद्वितीयाद्यभावेऽपि वस्तुतः शेषशेषिणोः सहोच्चारणम्। देशसामान्यं स्थानम्। समाख्या यौगिकः शब्दः। एतेषु पूर्वं पूर्वं प्रबलम्। धात्वर्थस्यैव भाव्यत्वं पदश्रुत्याप्रतीयते। स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यं तु दुर्बलम्। भूतं च स्वर्गपश्वादि द्रव्यं भाव्याय कर्मणे। उपदेश्यं न भूताय भव्यकर्मोपदेशनम्॥

स्वर्गः'' इति लोके व्यवहारदर्शनात् । सर्वत्र शब्दार्थे तस्यैव प्रामाण्यात्। तच्च कामापयितुं योग्यम् । तेन विना यागानिष्पत्तेः। द्रव्यं च भूतं सिद्धिं कर्म भव्यं साध्यम् । भूतस्य च भव्यार्थता युक्ता दृष्टार्थत्वात् । न तु भव्यस्य भूतार्थता। दृष्टोपकाराभावात् । तस्मादपियागहोमादिधात्वर्थ एव भाव्यः । अथवा स्वर्गादिकामनैव यागाङ्गमित्यस्मिन्नपि पक्षे तथैव।

नच यागेन किमपि फलं साध्यत इत्युक्तम् । तत्स्मादफलवन्त्येव कर्माणि, निःफलेषु च यागेषु लाभाभावाद्बहुवित्तव्ययाऽऽयाससाध्यत्वाच्च न कश्चित्प्रवर्ततेति, न कस्यापि कर्मजन्यफलभोक्तृत्वापरपर्यायोऽधिकारः सिध्यतीति प्राप्त आह—

( कर्मणां [1]फलवत्वम् )

## फलयुक्तानि कर्माणि । ॥ १ । १ । २ ॥

फलं पुरुषाभीष्टं स्वर्गधनपुत्रादिकम्, कर्माण्यग्निहोत्रादीनि, फलयुक्तानि फलैः सम्बद्धानि फलवन्ति फलस्य साधकानि भवन्तीत्यर्थः । कथम् ? इत्थम्, यजेतजुहुयादित्यत्र प्रत्ययस्य केवलमाख्यतरूमत्वमेवेति न मन्तव्यम् । किन्तु लिङ्प्रत्ययत्वेन विधिरूपत्वमप्यस्ति तत्राख्यातत्वाकारेण [2]भावनामाचष्टे, विधित्वाकारेण पुरुषं प्रवर्तयति, पुरुषश्च स्वाभिमतफलमन्तरेण न प्रवर्तत इति तदपेक्षितं स्वर्गमेव भाव्यतया विधिरुपादत्ते । स्वर्गशब्दश्च सर्वोत्कृष्टे सुखे रूढः। [3]तथाहि—“ यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । इच्छामात्रोपनीतं[4] तत्सुखं स्वर्गपदास्पदम् ''इति । द्रव्ये तु लाक्षणिकाः तस्मात्स्वर्गस्य भाव्यत्वं विधिश्रुत्यासिद्धम्। धात्वर्थस्य* तु भाव्यत्वमेकेन पदेन प्रतीयमानमपि न प्रत्ययेनावगम्यते, किन्तु प्रकृत्या। तथा सति, स्वर्गभाव्यत्वं भावनायाः प्रत्यासन्नम् । एकेनैव विधिरूपेणाख्यातप्रत्ययेनावगमात्। कर्मियोगादपि स्वर्गस्यैव भाव्यत्वम् । यागहोमादि तु तत्साधनम् । तथाहि—कि स्वर्गकामो यागायोपदिश्यते, यथा लोहितोष्णीषाः "प्रचरन्ति''इति । यथा वा यागः स्वर्गकामाय, यथा मलिनः स्नायात्, बुभुक्षितोऽश्नीयादिति । तत्र यदि स्वर्गकामः कर्मण उपदिष्यते। उपदिष्टोपि न प्रवर्त्तते । को हि परार्थं प्रयासमातिष्ठेत । तथाच कर्मचोदनाऽ-

१ 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्धन्धः' इत्याद्यधिकरणमत्रानुसन्धेयम्।

२ धात्वर्थातिफलमित्युक्तं भावनासन्निकर्षतः। विप्रकृष्टस्तु नामार्थस्तदर्थो न फलान्वयी । इत्युक्तेः ।

३ तन्त्रवार्तिके । ४ अभिलाषोपनीतमित्यपि पाठः ।

नर्थिकैव भवति । अथ यागः स्वर्गकामार्थः । ततोऽसौ पुरुषस्योपकरोति । तं पुरुषः स्वार्थेन करोतीति । तथाच, कर्मचोदनार्थवत्ताभवति; तस्माद्यागः स्वर्गकामस्योपकारकः । स्वर्गकामस्यानेक उपकारः, पुत्रपश्वन्नाद्यादिलाभरूपः, स यदि तत्रान्नाद्यादीनामन्यतमं करोति तदा स्वर्गशब्दोऽविवक्षितार्थः पुरुषमात्रवचनो भवति । तथाचाऽऽनर्थक्यमेव । अन्तरेणापि हि तद्वचनं पुरुषमात्रमाख्यातादेव गम्यते । तस्माद्यागात्स्वर्गो भवतीति निश्चीयते । अतश्च स्वर्गकामो यागेन कुर्यादिति वाक्यार्थः । अत्र स्वर्गं प्रार्थयमानस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते । अतः स्वर्गादिकं यागादेः फलमिति सिद्धम् । फलवन्ति कर्माणीति च । अतः कर्मणां फलवत्त्वात् कर्मजन्यफलभोक्तृत्वापरपर्यायोऽधिकारोपि पुरुषस्याग्निहोत्रादिकर्मसु सिध्यति ॥ २ ॥

( अधिकारविचारः )

अधिकारो वक्ष्यत इति प्रतिज्ञातम् । स केषामित्यपेक्षायामाह—

## सर्वेषामविशेषात् ॥ १ । १ । ३ ॥

सर्वेषां कर्मानुष्ठानसमर्थानामसमर्थानां चान्धामूकपङ्गुबधिरदेवर्षितिरश्चां कर्मस्वधिकारो भवति । कुतः ? अविशेषात् । फलार्थित्वस्य सर्वेषामविशिष्टत्वात् । फलं हि सर्वैरिष्यत एव । तत्राचेतनानां वृक्षादीनां कामनाभावदनधिकारः । तिरश्चां तु भवति। तिर्यञ्चश्चोद्विताास्तापेन तप्ताश्छायां व्रजन्ति। शीतपीडिताश्चातपम् । ननु तिर्यञ्चः प्रत्यासन्नमेव जानन्ति न तु कालान्तरभाविफलम् । वैदिकानि च कर्माणि कालान्तरफलान्येव । अतः कथं तिरश्चां तत्र प्रवृत्तिः? उच्यते, कालान्तरेऽपि फलं कामयमाना दृश्यन्ते । श्वानश्चतुर्दश्यामुपवसन्ति । श्येनाश्चाष्टम्यामिति । लिङ्गान्यपि वेदे सन्ति । "देवा ह वै सत्रमासत," "वनस्पतयः सत्रमासत" "गावो वा एतत्सत्रमासत" इत्यादीनि । तानि च देवानां सर्पाणां वनस्पतीनां गवां चाधिकारं दर्शयन्ति ।

नन्वेतेऽन्धादयो यथोक्तं कर्म कर्तुं न शक्ष्यन्तीति कथमधिकार एषाम्? उच्यते, यजेतेत्यादिप्रधानवाक्येन सर्वाधिकारं कर्मावगतम् । तदनुसारीणि चाङ्गवाक्यानि न तत्सङ्कोचे समर्थानि, अतश्चक्षुष्मन्तं प्रत्याज्यावेक्षणविधिः, अचक्षुषस्तुतद्विध्यभावात्तद्रहितमेवफलसाधनम्, एवं बधिरस्य वाचनरहितम्,

१ फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यादित्यधिकरणमत्रानुसन्धेयम् ।

मूकस्य मन्त्रोच्चारणरहितम्, पङ्गोश्च विष्णुक्रमणरहितमिति सर्वेषामर्थिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकार इति पूर्वः पक्षः ॥ ३ ॥

सिद्धान्तमाह—

## मनुष्याणां वारम्भसामर्थ्यात् ॥१ । १ । ४॥

वाशब्दः पक्षव्यावृत्तौ । न सर्वेषामधिकारः, किन्तु मनुष्याणामेव । कुतः ? आरम्भसामर्थ्यात् । मनुष्या एव हि यथाश्रुतं कर्मारब्धुं, कर्तुं च समर्था न देवर्षितिर्यगादयः । तत्र देवानां देवतान्तराभावादनधिकारः । न ह्यात्मानमुद्दिश्य त्यागः सम्भवति । किञ्च, देवाश्च प्राप्तस्वर्गादिकामाः । न च तेषां किञ्चिदवाप्तव्यमस्ति, यदर्थं कर्माणि कुर्वते । ऋषीणां चार्षेयाभावादनधिकारः । न हि भृग्वादयो भृग्वादिसगोत्रा भवन्ति ।

तन्त्ररत्ने तु विशेषः । अनादिर्हिकालोऽस्माकं मीमांसकानाम् । तेन भृगोरपि पूर्वपूर्वभृग्वन्तरसम्भवात्ततः पूर्वमप्येवमेवेति सम्भवत्येव भृगोर्भार्गवत्वमित्यस्त्येव ऋषीणामप्यधिकारः । तथा, येषां शब्द एव देवता तेषामिदयुक्तम्, यद्देवानां देवतान्तराभावादनधिकार इति । शक्यते हीन्द्रेणापीन्द्रशब्दोच्चारणेन हविस्त्यक्तुम् । तस्माद्देवानामप्यधिकार इति । नच तिरश्चाङ्गवादीनामधिकारः । प्रधानमात्रेऽपि सामर्थ्यात् । आसन्नचेतनत्वाच्च[1] । ते ह्यासन्नमेव चेतयन्ते न पारलौकिकं फलमिति । ननूक्तं शुनश्चतुर्दश्यामुपवासदर्शनात्, श्येनस्य त्वष्टम्यामुपवासदर्शनाच्च तेऽपि पारलौकिकं जानन्तीति । तत्कथमवगम्यत एते धर्मार्थमुपवसन्तीति । ये हि वेदस्मृतिपुराणादिकं पठन्ति त एव जानन्ति यदनेन कर्मणा इदं फलममुत्रप्राप्यत इति, नचैते वेदादिकं पठन्ति, नाप्यन्येभ्य आगमयन्ति, तेन शास्त्रार्थमविद्वांसः, फलमामुष्मिकमकामयन्तः कथं तत्साधनं कर्म कुर्युः ? तस्मान्न धर्मार्थमुपवसन्तीति । किमर्थं तर्ह्येतेषामुपवासः ? उच्यते, रोगादरुचिरेतेषाम् । तर्हि नियतकाले कथं रोगः ? उच्यते, नियतकाला अपि रोगा भवन्ति । यथा तृतीयकचातुर्थिकादिज्वराः । अधनाश्चैते । तस्मान्न गवादीनां तिरश्चामधिकारः । यानि पुनर्लिङ्गानि "देवा ह वै सत्रमासत" इत्यादीनि अर्थवादास्ते विधिप्ररोचनार्थाः । इत्थं सत्राणि प्रशस्तानि यानि कृतकृत्या अपि देवा आसते । आसन्नचेतनास्तिर्यञ्चोऽपि । अचेतना वनस्पतयोऽपि । किं पुनर्मनुष्या यथाश्रुतमनुष्ठातुं समर्था इति ।

---

१ आसन्नेषु समीपवर्तिषु चेतना बुद्धिर्येषामिति विग्रहः ।

तस्माद्यथाश्रुतकरणसामर्थ्यान्मनुष्याणामेवाधिकारो, न गवादीनामिति सिद्धम् ॥ ४ ॥

एवमपि मनुष्याणामधिकारे प्राप्ते आह—

( अङ्गहीनादीनामधिकारः )

## अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम् ॥ १ । १ । ५ ॥

अङ्गहीनाश्रोत्रियषण्ढशूद्रान्वर्ज्जयित्वा मनुष्याणामधिकारः कर्मसु भवति। मनुष्या अपि ये अङ्गहीना अङ्गेन चक्षुरादिना हीना अन्धपङ्गुमूकवधिरादयः, अश्रोत्रिया अनधीतवेदाः, षण्ढा नपुंसकाः, शूद्राश्च नैतेषामधिकार इत्यर्थः। आरम्भसामर्थ्यादित्यत्राप्यनुवर्त्तते। न चैतेऽङ्गहीनादयो यथाश्रुतं कर्मारब्धुं, कर्तुं वा शक्नुवन्ति। तद्यथा, नह्यन्ध आज्यावेक्षणं कर्तुं शक्नोति, मूको मन्त्रोच्चारणम्, पङ्गुश्च विष्णुक्रमणम्, बधिरश्च प्रेषश्रवणम्।[1] अनधीतवेदोऽश्रोत्रिय इत्युच्यते। स च न किमपि मन्त्रसाध्यं कर्म कर्तुं शक्नोति। षण्ढो नपुंसकः। तस्याप्यनधीतवेदत्वादद्रव्यत्वादशुचित्वाच्च नाधिकारः। शूद्रस्य चानधीतवेदत्वादनधिकारः। आज्यावेक्षणादिभिश्च विना कर्मणो वैगुण्यं भवत्येव। ननूक्तमशक्याङ्गरहितकर्मानुष्ठानादधिकारो भविष्यतीति। अत्रोच्यते, भवेदेवं यदि आज्यमवेक्षत इत्यादीन्यङ्गवाक्यानि स्वातन्त्र्येण पुरुषैः सम्बध्येरन्। प्रधानवाक्यशेषत्वात्तेषां तदङ्गयुक्तेन प्रधानवाक्येन तदङ्गयुक्तः क्रतुः पुरुषैः सम्बध्यमानोऽसमर्थान् परित्यज्य समर्थान्प्रति ज्ञायते। तेनान्धस्यक्रतुरेवाविहितो, न त्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यम्। न च प्रधानवाक्यविरोधः, सर्वाधिकारानिश्चयात्, विशेषाभावाद्धि सर्वाधिकारः स्यादस्त्यविशेष आरम्भसामर्थ्यम्। अतः समर्थानामेवाधिकारः।

यत्र तु प्रधानवाक्यविरोधो यावज्जीवं यजेतेत्यादौ। तत्र यथाशक्तिप्रयोगादपि फलं भवति। तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानमेव फलम्। ननु, आरम्भसामर्थ्यादित्यनेनैव गवादीनामिवान्धादीनामप्यधिकाराभावसिद्धेः, किमर्थं पुनरङ्गहीनादिवर्जमित्युक्तम् ? उच्यते—नियमार्थम्। एतेषामेवानधिका-

१ "नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना। क्रतुं प्रति विधिस्तस्मान्नाशक्तस्याधिकारिता" इत्युक्तेः। "नाश्रोत्रियकृते यज्ञे ग्रामयाजिहुते तथा। स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित्" इति स्मृतेस्तेषां गृहे भोजनस्यापि निषेधः, कुतो यज्ञाधिकारः ? यज्ञान्ते ब्राह्मणभोजनस्यावश्यकत्वात्।

रो न निर्धनस्य । तस्य चाधिकारो भवत्येव । न त्वारम्भसामर्थ्याभावादनधिकारः । अतो निर्धनोऽपि क्रत्वर्थं धनमर्जनादिना सम्पाद्यावश्यं यजेतेति । एवमन्धादिरपि ओषधिशास्त्रादिनाऽन्धत्वादिकं स्फोटयितुं शक्नोति तस्याप्यधिकारो भवत्येव । पूर्वमङ्गाहीनत्वावस्थायामाहिताग्निश्चेदकस्माद्रोगादिनाऽङ्गवैकल्ये जाते कर्मस्वधिकारो न भवति । नित्येषु तु यथाशक्ति कुर्वन्नधिक्रियत एव । अङ्गवैकल्ये सति अग्न्याधेयं न भवत्येव ।

(त्रिकाण्ड) मण्डनः—

" दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसङ्ग्रहम् । अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् । न कुर्याज्जनके [1]ज्येष्ठे सोदरेचाप्यकुर्वति । ज्येष्ठे श्रद्धाविहीने सत्याधेयं तदनुज्ञया । पितुः सत्यप्यनुज्ञाते नादधीत कदाचन " इति

हारीतः—

" सोदराणां तु सर्वेषां पारिवेत्यं कथं भवेत् । दारैस्तु परिविन्द्यते नाधानेन न चेज्यया " इति ।

कात्यायनः—

देशान्तरस्थक्लीबैकवृषणानसहोदरान् । वेश्यानिष्ठं च पतितं शूद्रतुल्यातिरोगिणः । जडमूकान्धबधिरकुब्जवामनखञ्जकान् । अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च । धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा । कुटिलोन्मत्तचौरांश्च परिविन्दन्न दुष्यति " इति ।

तथा ( त्रिकाण्डमण्डनः )—

नाधिकारविघातोऽस्ति भिन्नोदर्येऽपि [2]सोदरे । पङ्ग्वन्धमूकबधिरपतितोन्माददूषणे । सन्यस्ते छिन्नहस्तादौ यद्वा षण्ढादिदूषके । जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम् " इति ।

ननु द्रव्यवतोऽनङ्गहीनस्य समर्थस्य सतः शूद्रस्याधिकारः कथं न भवति, वेदे चैवंविधानि लिङ्गान्यपि सन्ति यैः शूद्रस्याधिकारो भवतीति गम्यते । "आधावेति शूद्रस्य " इति हविष्कृदाह्वाने । " मस्तुशूद्रस्य " इति सोमे पयोव्रतस्थाने । "अष्ठीवद्दघ्नं शूद्रस्य " इतिपितृमेधे । नन्वनधीतवेदत्वात् कथमधिकार इति । उच्यते—अनुपनीतस्यापि अनधीतवेदस्यापि, पत्नीवद्भविष्यति; इति प्राप्त आह—

---

१ श्रेष्ठ इतिकपाठः    २ चौरसे इतिकपाठः

( शूद्राणामनधिकारः )

## ब्राह्मणराजन्यवैश्यानाꣳश्रुतेः ॥ १। १। ६ ॥

शूद्रस्य[1] कुतो नाधिकार इत्यत्र हेतुः। ब्राह्मणराजन्यवैश्यानामेवाधानं श्रूयते। यतो ब्राह्मणादीनां त्रयाणामेवाधानं श्रूयते, न शूद्रस्य। तथाहि—"वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति। अतः शूद्रस्यान्याधानश्रवणाभावादनग्निः शूद्रः। अतस्तस्याग्निसाध्ये कर्मण्यधिकाराभावः। नन्वनाहितानेवाग्नीन् क्रीतलब्धानादाय करिष्यति। मैवम्। आदधीतेत्यात्मनेपदाद्धातोरेव फलेन भवितव्यम्, कर्मयोग्यता चाग्नीनां तत्फलम्, अतोऽन्येऽन्याहिता अन्यस्य कर्म न साधयन्ति। तेनानाहितानामग्नीनामुपादानमयुक्तम्। अतः शूद्रस्याधानाश्रवणात्तदेकोपायसाध्यानामग्नीनामभावादग्निसाध्ये कर्मण्यनधिकारः।

अथवा ब्राह्मणराजन्यवैश्यानामेवोपनयनश्रुतेः शूद्रस्यानधिकारः। तथा हि—"वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्" इति। उपनयनं चाध्ययनार्थम्। अतोऽनुपनीतस्याध्ययनाभावात्, अनधीतवेदत्वादनधिकारः शूद्रस्य। ननुमाभूदुपनयनम्, अनुपनीतोऽपि पठिष्यति। मैवम्, शूद्रस्य वेदाक्षरश्रवणे, उच्चारणे, धारणे च प्रायश्चित्तस्य दर्शनात्। श्रवणे त्रपुजतुभ्यां श्रोत्रपूरणम्। उच्चारणे जिह्वाछेदः, धारणे च शरीरभेद इति। तथा "पद्युह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येयम्" इति शूद्रस्य समीपेऽप्यध्ययनं प्रतिषेधति।

ननु[2] तर्हि "आधावेति शूद्रस्य" इत्यादीनां लिङ्गानां का गतिः? उच्यते, रथकारविषयाणि तानि। रथकारस्य हि कर्मस्वधिकारं वक्ष्यति। "रथकारस्याधाने" (१–१–९) इति। स च शूद्रसम्बन्धाच्छूद्रः कथ्यते। तस्य च मातामही शूद्रेति ॥ ६ ॥

अथ ब्राह्मणो यजेत स्वर्गकामो यजेतेत्येवमादिष्विदं सन्दिह्यते, किं

१ चातुर्वर्ण्यमविशेषात् इतिषष्ठस्य प्रथमपादे सप्तमाधिकरणम्। तत्र, "सत्यमध्ययनं नाङ्गं तत्कृतात्वङ्गमर्थधीः। तद्वतः क्रतवो लब्धा न तुर्यस्याक्षिपन्ति ताम्" इत्युक्तेः।

२ हविष्कृदाह्वानविशेषं प्रकृत्योच्यत एतत्। आदिना "मस्तुशूद्रस्य" "अष्ठीवद्दघ्नं शूद्रस्य" इत्यनयोरपि व्रतविशेष–पितृमेधोक्तयोर्वाक्ययोः सङ्ग्रहः।

ब्राह्मणं स्वर्गकामं च पुरुषमेवाधिकृत्य यजेतेत्येष उच्चरितः, स्त्रियं पुमांसं वेति। किं तावत्प्राप्तम् ? पुंलिङ्गनिर्देशात्पुरुषस्यैवाधिकारः । कुतः ? अत्र [1]लिङ्गस्य प्रकृत्यर्थतया विवक्षितत्वात् । यथा " ग्रहं सम्मार्ष्टि " इत्यत्र । अतः पुरुषस्यैवाधिकारो, न स्त्रियाः, अद्रव्यवत्वात् । यतः स्त्री निर्धना; अतः सा द्रव्यत्यागात्मकं कर्म कर्तुं कथं शक्नोति ? द्रव्याभावात् । द्रव्याभावश्च " भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् " इति । स्मृतेः तस्मात्पुरुषस्यैवाधिकार इति प्राप्त आह—

( पुंसा सहैव स्त्रिया अधिकारः )

## स्त्री चाविशेषात् ॥ १ । १ । ७ ॥

स्त्री च अग्निहोत्रादिकर्मस्वधिकारिणी भवति । कुत ? अविशेषात् । यतः स्वर्गकामो ब्राह्मण इत्येतत् पुंलिङ्गं श्रूयमाणमपि न विशेषकरम् । यत इदमुपदिश्यमानस्य विशेषणम् । यः स्वर्गकामः स यजेतेत्येवम् । तेन विधिसंस्पर्शाभावादविवक्षितम् ।
अतो न पुरुषस्यैवाधिकारः । किन्तु स्त्रिया अपि । अथवा अविशेषादित्यर्थः । तदुक्तं जैमिनिना " फलोत्साहाविशेषात्त " इति (६-१-२-१२)

ननूक्तं निर्द्धनात्वान्नाधिकार इति । मैवम्, धनवती हि सा, तस्या अपि कर्तनादिना द्रव्यार्जनस्य सम्भवात् । पितृभ्रातृभर्त्रादिदत्तसम्भवादर्जितस्योभयसाधारणत्वाच्च । " धर्मे चार्थे च कामे च नातिचरितव्या ( इत्युक्तेः ) पाणिग्रहाद्धि सहत्वं कर्मसु तथा कर्मफलेषु च " " द्रव्यपरिग्रहेषु च" इत्यादिस्मरणात् ।

ननूक्तं "यत्ते समधिगच्छन्ति" इत्यादिकम्। तत्रोच्यते स्मृतिप्रमाण्यान्निर्धनतया भवितव्यम् । श्रुतिविशेषात् फलार्थिना यष्टव्यम्, यदि स्मृतिमनुरुध्य भार्या परवशान्निर्धना स्यात् । यजेतेत्युक्ता सति न यजेत । तत्र स्मृत्या श्रुतिर्बाध्येत । न चैतद्युक्तम्। तस्मात्फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयात्, यजेत चेति । अतः स्मर्यमाणमपि निर्धनत्वमन्याय्यमेव । श्रुति-

---

१ 'लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः" इति जैमिनीयं पूर्वपक्षसूत्रं मनसि निधायोक्तमत्रेत्यादि ।

विरोधात् । अतो निर्धनत्वप्रतिपादकं वचनमस्वातन्त्र्यपरं व्याख्येयम् । तस्मात्स्त्रिया अपि फलार्थित्वाविशेषाद्धनवत्वाच्चाधिकारो भवति ॥ ७ ॥

## दर्शनाच्च ॥ १ । १ । ८ ॥

दृश्यते चायमर्थो वेदे । यत्पत्न्यपि कर्मस्वधिक्रियत इति । " मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीम् " इति " पत्नी लौह " इति " पत्नी च गार्हपत्ये तूष्णीम्" इति च । अत्र योक्त्रादिविधिपरेषु वाक्येषु पत्न्या अपि कर्मस्वधिकारदर्शनात्पत्न्यप्यधिक्रियत इत्युक्तम् । अथवा वेदे पत्न्या अपि धनवत्त्वादर्शनाच्च पत्न्यप्यधिक्रियते । तथाहि " भयदा पत्नीं संयाजयन्ति भयद्धीर्या हि पत्न्यो भयदा वा एताः परगृहाणामैश्वर्यमवरुन्धत " इति । एवं पत्न्या अधिकारे सिद्धे, इदं चिन्त्यते । किं पत्नी पृथग्यजेत, यजमानश्च पृथक्, उतोभौ सम्भूय यजेयातामिति । किं प्राप्तम् ? पृथक् पृथगिति । कुतः ? यजेतेत्याख्यातप्रत्ययगताया एकत्वसङ्ख्याया उद्देश्यगतत्वाभावेन विवक्षाया वारयितुमशक्यत्वात् । अत एककर्तृकत्वसिद्धये यजमानेन पत्न्या च पृथग्यागः कर्तव्य इति पूर्वः पक्षः ।

सिद्धान्तस्तु । न पृथग्यागः कार्यः कुतः ? वैगुण्यसम्भवात् । दर्शपूर्णमासादौ आज्यस्य पत्न्यवेक्षणं यजमानावेक्षणं चेत्युभयमाम्नातमस्ति । तत्र पृथक् प्रयोगे क्रियमाणे यजमानकर्तृके यागे पत्न्यवेक्षणं लुप्येत, पत्नीकर्तृके च यजमानावेक्षणम् । तस्मादवैगुण्याय सहैव दम्पती यजेयाताम् । ननु पृथगपि यजमानः पुमानध्वर्य्वादिवत्परिक्रयेणाज्यावेक्षणार्थं पत्नीं सम्पादयिष्यति स्त्री च यजमानम् । मैवम्, स्वामिनः परिक्रयेणासम्पन्नत्वात् । न हि या काचित् स्त्री पत्नी शब्दवाच्या । यज्ञस्वामिनी हि सा । "पत्युर्नो यज्ञसंयोगे" इति पाणिनिस्मरणात् । एवं यजमानशब्दमपि यज्ञस्वामिन्येव स्मरन्ति । तस्मात्सहैव कर्तृत्वमुभयोः । न च यजेतेत्येकवचनं विरुद्धम् । अग्नीषोमौ देवतेत्यत्र यथा व्यासोक्तयोर्देवतात्वाद्देवतैक्यम्, तथा दम्पत्योरेकमेव कर्तृत्वमित्यङ्गीकारात् । अनयोर्हि उद्वाहकाल एव द्रव्यसाधारण्यमुक्तम् । " धर्मे चार्थे च कामे च नातिचरितव्या" इत्यनेन । अतो यस्त्यागः स इतरेतरसंसृष्टयोरेव दम्पत्योः । नहि साधारणमेकेन त्यक्तुं शक्यते । भिन्नयोरपि दम्पत्योः संसृष्टद्रव्ययोः पृथक् स्वतन्त्रकर्तुमप्रभवतोरेकमेव स्वातन्त्र्यलक्षणं कर्तृत्वम् ।

ननु सत्रिवत्कर्तृभेद इति युक्तमेकवचनम् । सत्रिणां हि पृथग्द्रव्यतया पृथगेव कर्तृशक्तिर्वाचनिकानेककर्तृत्वसिध्यर्थं तु कर्तृणां साहित्यम् । इह तु सहैव कर्तृत्वमितिविशेषः ।

ननु साधारणमपि धनं विभज्य पृथग्यागः सम्भवति, मैवम्, यतस्तयोर्विभागः प्रतिषिद्धो न भर्त्रा सह विभजेदिति । तस्मान्न विभज्य यागः । अतो द्रव्यसाधारण्याद्विभागप्रतिषेधाद् " धर्मे चार्थे च कामे च नातिचरितव्या " इतिवचनात्पृथक्प्रयोगे प्रागुक्तवैगुण्यापत्तेश्च स्वामिभ्यां समुचिताभ्यामेवेक्षितस्याज्यस्य कर्माङ्गत्वात् न पृथक् कर्तृत्वम्, किन्तु सहैव । एवंच यजमानविद्वत्तयैव पत्न्या अपि कार्यसिद्धेर्नाविद्वत्तया तस्या अधिकारभङ्गः । अत एव सूत्रकारः " अनुचरीर्वा फलाधिकारादितरासाम् " इति पत्न्या अपि फलं दर्शयति । तिरपि " दिवि ज्योतिरजरमारभेत " इति । तथा च स्मृतिः । " नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । शुश्रूषयति भर्त्तारं तेन स्वर्गे महीयते " इति ।

एवं दम्पत्योः सहाधिकारे तुल्यफलत्वे च सिद्धे इदं चिन्त्यते । किं सर्वं याजमानं पत्न्या अपि कर्त्तव्यम् ? उत यावदुक्तमाशीर्ब्रह्मचर्यादिकमिति । किं प्राप्तम् ? तस्या अपि यजमानत्वेन तुल्यत्वात्सर्वं याजमानं तयापि कर्त्तव्यमित्येवं प्राप्ते ब्रूमः । अत्र जैमिनिसूत्रम्, "तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्" इति । ( ६-१-६-२४ ) तस्या यावदुक्तं स्यात् । अतुल्यवात् । यजमानस्तु पुमान्विद्वांश्च । पत्नी च स्त्रीत्वाविशेषाच्च । अतः क्रत्वर्थेषु यानि यजमानं गृह्णान्ति । तद्यथा " यजमानो वेदं बध्नाति " "पात्राण्यासादयति" " शुक्रमन्वारभेत " इत्यादीनि । तत्र यजमानस्योपादेयत्वादेकवचनं विवक्षितम् । अतस्तत्र पत्न्या न कर्तृत्वम् । एवमेव " पत्न्याज्यमवेक्षते " " श्रदस्मै नर इत्येनमवेक्षते पत्नी " इत्यादौ पत्न्या एव कर्तृत्वं न यजमानस्य, उक्तादेवहेतोः, यानि च क्रत्वर्थानि समन्त्रकाणि तेष्वविषयत्वात्पत्नी न स्यात् । स्त्रीणामध्ययनप्रतिषेधात्सा मन्त्रोच्चारणं कर्तुं न शक्नोति । न चान्यथानुपपत्त्या तस्या अप्यध्ययनं कल्पयितुं शक्यते । सम्पन्नविद्येन पुंसा तेषामनुष्ठानसिद्धेः । यद्धि क्रत्वर्थं तदेकेन येन केनचित्कर्तव्यम् । अतोऽनुपपत्तेः क्षीणत्वात्प्रतिषिद्धस्य पत्न्या अध्ययनस्य पुनः प्रसवे न किंचित्प्रमाणमस्ति, तस्मात्तदपि पत्न्या न कर्त्तव्यम् ।

याश्चाशिषो यच्च ब्रह्मचर्यं तत्पुरुषं प्रति गुणभूतं न तत्रान्यतरेण कृते सि-

ध्यति, अन्यतरस्य संस्कारो हीयेत । नच तत्र यजमानस्योपादेयत्वेन श्रवणम् । तस्माल्लिङ्गमप्यविवक्षितम् । अत्र आसां ब्रह्मचर्यमुभयोः "आशीः" शब्देनात्र संस्कारा लक्ष्यन्ते । व्रत्याशनाधःशयनपावनाक्षाञ्जनाभ्भाञ्जनादयः । ते ह्युभयोर्भवन्ति । संस्कारेष्वपि पत्न्या वपनं न भवति । कुतः ? वपनविधौ "केशश्मश्रु- वपते" इति समाहारद्वन्द्वोऽयम् । तत्र केशश्मश्रुणोरितरेतरयोगे सति शास्त्रोक्तं वपनं न सम्पद्यते । न च पत्न्यास्तयोः साहित्यमस्ति । श्मश्रुभावात् । अतस्तस्या न वपनमसामर्थ्यादिति तन्त्ररत्ने । ब्रह्मचर्यग्रहणं काम्यानां लक्षणार्थम् । ब्रह्मचर्याशीर्ग्रहणेनैव लक्षितत्वात् । कामा अपि पत्न्या भवन्ति, तदभावेऽधिकारानुपपत्तेः । ये मन्त्राः क्रत्वर्थकास्तेष्वपि यजमान एव कर्त्ता विद्वत्वात्स्वतन्त्रत्वाच्च । अतः सर्वं समन्त्रकममन्त्रकं च याजमानं यजमानेनैव कर्त्तव्यम् । आहृत्य विहितं त्वाज्यावेक्षणादि पत्न्या कर्तव्यं नान्यत् । तदेवमङ्गहीनादिवर्जितानां ब्राह्मणक्षत्रियवैश्यानां पत्नीसहितानामग्निहोत्रादिकर्मस्वधिकार उक्तः ॥८॥

( रथकारस्याधान एवाधिकारः )

अथ रथकारस्याधिकारमाह—

## रथकारस्याधाने ॥ १ । १ । ९ ॥

रथकारस्याधाने अग्न्याधानकर्मणि अधिकारो भवति । "वर्षासु रथकार आदधीत" इतिश्रुतेः । अत्रेदं सन्दिह्यते । किं त्रैवर्णिकानामन्यतमो रथकरणयोगाद्रथकार इत्युच्यते ? आहोस्विन्नियतं किञ्चिज्जात्यन्तरमिति । किं तावत्प्राप्तम् ? त्रैवर्णिकानामन्यतम एवेति । कुतः? सोऽपि हि रथं करोतीति योगाद्रथकार इत्युच्यते । तस्य च त्रैवर्णिकत्वादाधनं प्राप्तमेव । ऋतुमात्रं विधेयम् । तथा सत्येकार्थविधानाद्वाक्यभेदो न भवति, लाघवं च । जात्यन्तरपक्षे तु तस्याधानं विधातव्यमृतुसम्बन्धश्च । तथा सति वर्षास्वादधीत रथकार आदधीतेत्येवं वाक्यभेदः स्यात् । अपि तु शूद्रस्त्वसमर्थत्वात्प्रतिषिद्धः । तस्मात्त्रैवर्णिकानामन्यतम एवेति पूर्वः पक्षः ॥ ९ ॥

सिद्धान्तमाह—

## नियतं च ॥ १ । १ । १० ॥

चो वेत्यर्थे । वाशब्दश्च पूर्वपक्षनिरासार्थः । न त्रैवर्णिको रथकारः । तस्याशिल्पोपजीवनस्य प्रतिषिद्धत्वात् । किन्तु नियतं जात्यन्तरमेव । अत्र केचिदेवमाहुः—वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना करणी, तस्यां

च करण्यामाहिष्यादुत्पन्नो रथकार इति । तदुक्तं स्मृतौ। "माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् । शूद्रायां करणो वैश्याद्" इति । याज्ञवल्क्योऽपि "वैश्याशूद्र्योस्तु राजन्यान्महिष्येग्रौ सुतौ स्मृतौ । वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ।" विन्नासु विधिना परिणीतासु । तथा । "माहिष्येण करण्यां तु रथकारः प्रजायते" इति । अतो रथकारशब्द एवंविधसङ्करजातौ रूढः ॥ रूढिश्च योगाद् बलीयसीतिन्यायात् । रथं करोतीति योगं वाधित्वा जात्यन्तरमेव रथकारशब्देनोच्यते । तस्यैवाधानं कालविशिष्टं विधीयते । विशिष्टविधानाच्च वाक्यभेदोऽपि न भवति अपरे त्वाहुः—रथकारशब्देनात्र सुधन्वनां ग्रहणम्। "ऋभूणांच" इत्याधानमन्त्रवर्णात् । सौधन्वानाश्च ऋभव इति सामानाधिकरण्यनिर्देशात् । तथाचाह मनुः । "व्रात्या तु जायते वैश्या न सुधन्वाचार्य एव च । पारुषश्च विजन्मा च मैत्रः सात्वत एव च" इति । अतो मनूक्तो यः सुधन्वा व्रात्यवैश्यपुत्रः, तत्पुत्राणां सौधन्वनानामृभूणामेवात्राधिकारः । यस्तुयाज्ञवल्क्येनोक्तो न तस्याधिकारः, सत्यपि रथकारशब्दवाच्यत्वे मन्त्रवर्णात् । छागन्यायेन सौधन्वनानामेवाधिकार इति । तथाच जैमिनिः। "सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन्" ६–१–११–५० इति । सौधन्वनानामजातिहीनास्ते केचित्त्रैवर्णिकेभ्यो जात्यन्तराः । नच ते शूद्रा, न वैश्या, न क्षत्रिया, न ब्राह्मणा इति । तेषामिदमाधानम् । कथमप्रसिद्धेर्मन्त्रवर्णाच्च । मन्त्रवर्णो हि भवति । सौधन्वना ऋभव इति । "ऋभूणत्वा" इति च रथकाररथाधानमन्त्रः । तस्मात्सौधन्वना ऋभवश्च रथकाराः । अपि च "तं नेमिमृभवो यथा" इतिच । 'ये नेमिं नमन्ति ते ऋभवः' इत्युच्यन्ते । रथकाराश्च नेमिं नमन्ति । तस्मादत्रैवर्णिकानामशूद्राणामेतदाधानमिति शबरस्वामिनः ॥ १० ॥

ननु विध्यभावेन सौधन्वनानामसमर्थतयाऽनधिकारात्त्रैवर्णिक एवावयवव्युत्पत्त्या रथकारशब्देन किमिति न गृह्यते । सोऽपि हि रथकारो भवति । तस्याधानं प्राप्तमेवानूद्य, ऋतुमात्रविधानाल्लाघवं भवति । जात्यन्तरे तु विशिष्टविधानाद् गौरवं स्यादित्याशङ्कायामुत्तरमाह—

नाभावादितिवात्स्यः ॥ १ । १ । ११ ॥

वात्स्य ऋषिरित्याह । न त्रैवर्णिको रथकारः । कुतः ? अभावात् । त्रैवर्णिकस्य रथकारस्याभावात् । कथमभावः ? यौगिकोऽयं शब्दो रथं करोतीति रथकार इति तेन यावत्कालं रथकरणसम्बन्धस्तावत्कालं रथकार इत्युच्यते न

सर्वदा। अतस्त्रैवर्णिकस्य रथकारस्याभावात्, विद्यारहितस्यापि ऋभुसौधन्वन-सात्वनापरपर्यायस्य जात्यन्तरस्य रूढ्यवगतस्य वचनादाधानेऽधिकारो भवति।

अत्र पार्थसारथिमिश्रा आहुः। रथकारस्यैव ऋभुसौधन्वनसात्वताद्यपर-नामधेयस्याऽऽधानान्तरं वर्षासु विधीयते वचनात्। नहि वचनस्य किञ्चिदश-क्यमस्ति। तेन तावद्रूढिबलेन योगं बाधित्वा सौधन्वनानामाधाने विहिते तद्व-लेनैव यथाकथञ्चिन्मात्रौपयिकं विद्यार्जनमपि विनोपनयनमाक्षिप्यते। स्वाध्याय-विधिविहिताध्ययनयनाङ्गत्वादुपनयनस्य रथकारस्य तदभावादाधानविधिनैव विद्या-र्जनमाक्षिप्यते। नचास्याऽऽधानसम्भवेऽपि क्रत्वधिकारः सम्भवति। विद्याभावात्। आधानविधिस्तु तावन्मात्रोपक्षीणत्वान्नक्रतुष्वधिकारं कल्पयितुमर्हति। तेन प्रधानकर्मैव तस्याधानं विश्वजिदादिवत्कल्प्यफलम्। नचास्याऽऽहवनीयाद्युत्पा-दकत्वम्, अर्थकर्मत्वेनाग्निसंस्कारानर्हत्वात्। तस्मादाधानं प्रधानकर्म रथकार-स्य विधीयत इति ॥११॥

रथकारस्याधान इत्येवमादीनां सूत्राणामपरा व्याख्या। रथकारस्याधा-नेऽधिकारो भवति तत्र श्रुतत्वादित्युक्तम्। रथकारशब्दस्तु जात्यन्तर एव रूढः। अतो यौगिकाशङ्कैवनास्ति। अतः प्रकारान्तरेण व्याख्यानं क्रियते। रथकारस्य किमाधानमात्रेऽधिकार उत त्रैवर्णिकवत्सर्वकर्मस्वपीति ? तत्र "वर्षासु रथकार आदधीत" इति श्रवणादाधानमात्रेऽधिकार इति प्राप्ते आह नियतं च। तस्य रथकारस्य नियतं नित्यं कर्माग्निहोत्रं दर्शपूर्णमासादिकं भवति। चकारात्काम्यं-नैमित्तिकं च। कुतः ? आधानश्रवणात्। आधानं हि तस्य श्रुतम्। तच्च गार्हपत्याद्यग्नीनामुत्पादकम्। अग्नयश्च कर्मार्थमेवोत्पद्यन्ते। स्वतोऽपुरुषार्थत्वात्। अतः कर्मार्थमुत्पादकाधानविधानादेवैवमवसीयते, यदस्य सर्वकर्मस्वधिकारो भव-तीति। एवं प्राप्ते आह नाभावादितिवात्स्यः। रथकारस्य सर्वकर्मस्वधिकारो भवतीति यदुक्तम्। तन्न। कुतः अभावात्। रथकारस्योपरितनकर्मसु लिङ्गाभा-वाद्वात्स्य आचार्य आह—यत्, रथकारस्य कर्मसु लिङ्गानि न सन्ति। त्रैवर्णिकानां तु आधानं श्रुतम्। कर्मसु लिङ्गानि च सन्ति। "एहीति ब्राह्मणस्यागृह्याद्रवेति-वैश्यस्य राजन्यबन्धोश्च" इति। तथा "पयोव्रतं ब्राह्मणस्य यवागू राजन्य-स्यामिक्षा वैश्यस्य" इति। एवमिदं रथकारस्येत्येवं कुत्रापि कर्मणि लिङ्गं नास्ति। तेनास्योत्तरकर्मस्वनधिकारो वचनाच्चाधानमात्रं भवतीति गम्यते। एवं प्राप्त इदमेव सूत्रं पुनः पठित्वा परिहारेत्वन व्याक्रियते। लिङ्गाभावादनाधिकारो रथकारस्य कर्मस्वितिमदुक्तम्।

तत्र; कुतः ? अभावात् । लिङ्गाभावस्यैवाभावात्[1] । लिङ्गसद्भावादित्यर्थः । कानि पुनस्तानि लिङ्गानि यै रथकारस्यापि कर्मस्वधिकारो व्याक्रियते ? उच्यते— "आधावेति शूद्रस्य" "अष्ठीवद्घ्नं शूद्रस्य" "मस्तु शूद्रस्य" इति । शूद्रसम्बन्धाद्रथकारोऽत्र शूद्रशब्देनाभिधीयते, तस्य मातामही शूद्रेति ।

चतुर्थवर्णस्य शूद्रस्य तु प्रतिषेध उक्तः, "शूद्रवर्जम्" इति । तेनैतानि गौणशूद्रविषयकाणीति ।

रथकारस्याधानमात्रेऽधिकारपक्षे, एतानि निर्विषयाण्येव स्युः । तस्माद्रथकारस्योत्तरकर्मस्वप्यधिकार इति सिद्धम् । तथाचोक्तं याज्ञवल्क्यस्मृतिविवृतौ मिताक्षरायां विज्ञानेश्वरेण, "क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः, वैश्याच्छूद्रायामुत्पादिता करणी, तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवति। तस्य चोपनयनादि सर्वं कार्यं वचनात्; यथाह शङ्खः—क्षत्रियवैश्यानुलोमानन्तरोत्पन्नजो रथकारस्तस्याध्ययनेज्यादानोपनयनसंस्कारक्रियाश्चाप्रतिषिद्धा, रथसूत्रं वास्तुविद्याध्ययनवृत्तिता चेति । रथसूत्रं रथविधेति मञ्जर्यां व्याख्यातम् । तत्र तु संस्कारक्रियाश्चाप्रतिषिद्धा रथसूत्रमित्येवं पाठः । अतो याज्ञवल्क्योक्त एव रथकारोऽत्र गृहीतुं न्याय्यः, तस्य च शङ्खोक्तयज्ञादिकर्मस्वधिकारः । तथासति "आधावेति शूद्रस्य" इत्यादीनि वेदवाक्यानि[2] सार्थकानि भवन्ति ।

---

१ "लिङ्गाभावादनधिकारो गम्यते । एवमभिधाय पुनराधिक्येन व्याख्यायते । अभावाल्लिङ्गानामुपरितनकर्मस्वधिकारो न स्यात् । अस्ति तु लिङ्गस्य भावः । न च लिङ्गभावमात्रेणैवानधिकारो गम्यते । आधानं हि तस्य श्रुतम् । तद्धि संस्कार्याग्निद्वारेण परार्थमिति वात्स्यग्रहणमुक्तार्थम्" इति कर्कः । 'अस्ति तु भावः' इति सामान्येनोक्तं लिङ्गसत्त्वं प्रदर्शयति अपिचेत्यादिना । नाभावादिति सौत्रपदे न अभावो नाभाव इति नशब्देन सुप्सुपेति समासः । उत्तरकर्मस्वनधिकारप्रयोजकत्वेनाभिमतस्य लिङ्गाभावस्याभावादित्यर्थः । उत्तरकर्मसु रथकारस्याधिकारोऽस्त्येवेति शेष इति महामहोपाध्यायश्रीनित्यानन्दपर्वतीयगुरुचरणाः । २ अत्राह भगवान् खण्डदेवः—मम तु प्रतिभाति—नाधानस्यार्थकर्मत्वं प्रमाणाभावात् । अग्निमति द्वितीयान्तपदे लक्षणादेरावश्यकत्वे रथकारपदे योगाङ्गीकारस्यैव न्याय्यत्वाच्च; अपि त्वाहवनीयाद्युत्पादकत्वमेव । न च तेषामनुपयोगः, अविद्वत्तया क्रत्वधिकाराभावेन

[१]मनूक्त व्रात्यवैश्यजातसुधन्वपर्याये रथकारे गृह्यमाणे तेषां वैयर्थ्यमेव स्यात्। न च तदिष्यते। तस्माद्याज्ञवल्क्योक्तमेव श्रुतम्, श्रुतिसम्मतत्वादिति ॥११॥

( स्थपतिनिषादस्य गावेधुकेष्टावधिकारः )

## निषादस्थपतिर्गावेधुकेऽधिकृतः ॥ १ । १ । १२ ॥

निषादस्थपतिर्गावेधुके चरावधिकृतोऽधिकारी भवति। एवं हि श्रूयते– "यस्य रुद्रः प्रजाः शमयेत्स वास्तुमध्ये रौद्रं चरुं निर्वपेत्" इति, एतामिष्टिमुपक्रम्य श्रुतम्, "एतया निषादस्थपतिं याजयेत्" इति; निषादस्थपतिर्यजेतेत्यर्थः।

तत्रायं सन्देहः, किमयं षष्ठीसमासः, निषादानां स्थपतिर्निषादस्थपतिरिति, निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति कर्मधारयो वा। तत्र यदि षष्ठीसमासस्तदा यो द्विजातिरेव विद्वान् निषादानामाधिपत्यं करोति, तस्यात्राधिकारः, यदि च कर्मधारयस्तदा निषाद एव यः स्थपतिस्तस्यात्राधिकार इति।

तत्र त्रैवर्णिकस्यैव समर्थत्वाद्विद्वत्वादग्निमत्वाच्चात्राधिकारो युज्यते, अन्यजातीयस्य निषादस्यावैधत्वेनानग्निमत्त्वेन चासमर्थत्वात्। तस्मात् षष्ठीसमास एवायमिति पूर्वः पक्षः।

---

तत्रानुपयोगेऽपि "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति वचनविहिते दाहे, उपयोगसम्भवात्। न ह्ययं दाहः कर्मोपयुक्ताहिताग्निरप्रतिपत्यर्थः, येन कर्माभावेनाभावः शङ्क्येत। तथात्वे, अहिताग्निपदेनाधानस्यैवोपस्थितेस्तदङ्गत्वस्यैवापत्तौ क्रत्वङ्गत्वानापत्तेः, न चेष्टापत्तिः। तथात्वे प्रतिपत्तिं विना आधानफलाहवनीयादेरनिष्पत्त्यापत्तेः। अतः फलश्रवणादर्थकर्मैवेदमिति युक्तस्तत्राहवनीयादेरुपयोगः। पवमानेष्ट्यङ्गभूतपात्रसत्त्वाच्च यज्ञपात्रसमुच्चयेऽपि न क्षतिः। अत एव पवमानेष्ट्युत्तरं प्राक् क्रतुभ्यो मरणे अग्निभिः पात्रैश्च दाहः, पवमानेष्टिभ्यः पूर्वं मरणे तु, उक्तवचनबलादग्निभिरेव दाह इति। तन्त्ररत्ने तु– यद्यपि च विद्याभावादस्योत्तरक्रतुष्वनधिकारः स्यात्तथाप्याधानमात्रमरणिमथितलौकिकाग्निगुणकं कल्प्यस्वर्गफलकं सधर्मकमनुष्ठेयम्। एवं चाहवनीयादेरनुपयोगादभावेन तदुद्देशेन विहितानां 'नक्तं गार्हपत्यमादधाति' इत्यादीनां धर्माणां लोपेऽपि, एकस्मिन्नेव कुण्डे स्थण्डिले वा त्रिषु वा तेष्वग्न्याधानमितराङ्गयुक्तं कार्यमिति।

१ व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च।

सिद्धान्तस्तु—कर्मधारयो निषादश्चासौ स्थपतिश्चेति । कुतः ? षष्ठीसमासपक्षे निषादपदे लक्षणाप्रसक्तेः । न ह्यत्र षष्ठी श्रूयते यतः सम्बन्धः प्रतीयेत, अतो निषादपदेनैव[1] षष्ठ्यर्थो लक्षणीयः । इतरस्मिंस्तु पक्षे द्वयोरपि पदयोर्मुख्यार्थतैव, न लक्षणा । तस्मान्निषाद एव स्थपतिरत्राधिकारी । श्रुतिबलादविद्वाननग्निमानपीति सिद्धम् । अपि चात्र निषादद्रव्यं दक्षिणा श्रूयते "[2]कूटं दक्षिणा काणो वा गर्दभः" इति । कूटं हि निषादानामेवोपकारकम्, [3]नार्याणामिति ॥ १२ ॥

---

१ शब्देनेत्यपि पाठः ख पुस्तके । २ कूटं हलाग्रसंस्थितं लौहम् ।

३ अत्राहुः प्राञ्चाः—पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते । तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया ॥ आहिताग्नेश्च यदि तु कर्मधारय इष्यते । अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता ॥ तेन षष्ठी समासोऽयमिति प्राप्तेऽभिधीयते । निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् ॥ नहि श्रुता येन तत्सम्बन्धी विधिर्भवेत् । निषादपदमेवातः षष्ठ्यर्थे लक्षयेदिदम् ॥ कर्मधारयपक्षे तु न काचिदपि लक्षणा । निषाद एव स्थपतिरतः श्रुत्या प्रतीयते ॥ तेन श्रुतिबलादज्ञो नाहिताग्निश्च सन्नपि । निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् । इति ॥ नव्येष्वपि प्राह भगवान् खण्डदेवो निषादस्थपत्यधिकरणे—"रौद्रं वास्तुमध्ये चरुं निर्वपेत्' इति प्रक्रम्य 'एतया निषादस्थपतिं याजयेत्' इति श्रुतम् । तत्र यद्यपि निषादः स्थपतिर्यस्येति बहुव्रीहौ पदद्वयेऽप्यपदार्थलक्षणेति स नाश्रीयते, तथापि निषादानां स्थपतिरिति षष्ठीतत्पुरुषे तदभावाद्विद्याक्षेपशक्तिकल्पनाभिया कर्मधारयानङ्गीकारेण स एवाश्रीयते । नच तत्रापि पूर्वपदे निषादसम्बन्धिनी लक्षणा, कारणाभावात् । यद्यपि हि क्लृप्तावयवार्थयोगेनैवोपपत्तौ न समासे विशिष्टार्थशक्तिकल्पना प्रमाणिकी । तथापि कर्मधारयेऽभेदस्येव षष्ठीतत्पुरुषादावपि स्वस्वामिभावादिभेदसम्बन्धस्य संसर्गविधयैव भानोपपत्तेर्लक्षणायामनुपपत्त्यभावः । न च नैयायिकवदस्माकं नामार्थयोरभेदान्वय एवेत्यत्र प्रमाणमस्ति । राजा पुरुषोऽस्तीत्यादौ सर्वत्र नामार्थस्य विभक्त्यर्थे तस्य चाख्यातार्थेऽन्वयाङ्गीकारेण परस्परान्वयस्य समासातिरिक्ते क्वाप्यप्रसक्तत्वात् । अतः समास एव प्रसक्तस्य तस्य संसर्गविधयैव भानोपपत्तेर्न लक्षणेति प्राप्ते— समानाधिकरणपदस्थले पुरुषोऽस्तीत्यादौ क्रियान्वयोत्तरं पार्ष्टिकान्वयस्याभेदसम्बन्धेनै-

( स्त्रीप्रसङ्गे ब्रह्मचारिणः प्रायश्चित्तम् )

## वाऽवकीर्णिनो गर्दभेज्या ॥ १ । १ । १३ ॥

यो ब्रह्मचारी सन् स्त्रियं गच्छति, सोऽवकीर्णी, तस्यावकीर्णिनः स्खलितब्रह्मचर्यस्य गर्दभेज्या, गर्दभेनेज्या यागो गर्दभेज्या प्रायश्चित्तार्था भवति। वाशब्दो विकल्पार्थः । तेन [१]गृह्योक्तमपि प्रायश्चित्तान्तरमाज्याहुतिद्वयरूपं विकल्पेन भवति, " अथापरमाज्याहुती जुहोति, कामावकीर्णोऽस्मि " इत्यादिकम् । शाखान्तर उभयस्य विकल्पेन श्रुतत्वात् ॥१३॥

---

वानुभवात् , राज्ञः पुरुषोऽस्तीत्यादौ व्यधिकरणपदस्थले च भेदसम्बन्धेनैवानुभवाल्लाघवेन नामप्रयोज्यतदर्थान्वयबोधस्याभेदविषयकत्वमेवेति नियमकल्पनात् स्वस्वामिभावादिसम्बन्धस्य षष्ठीतत्पुरुषादौ संसर्गविधया भानानुपपत्तेरवश्यं पूर्वपदे स्वार्थसम्बन्धिलक्षणाभङ्गीकृत्य तस्योत्तरपदार्थेऽभेदेनान्वय इत्यङ्गीकार्यम् । अत एव नामप्रयोज्यनामार्थविशेष्यकनामार्थप्रकारकाभेदसंसर्गबोधकत्वावच्छिन्नं प्रत्येकाधिकरणवृत्तिप्रातिपदिकार्थतावच्छेदकनामद्वयसमभिव्याहारस्य द्वन्द्वभिन्ननामद्वयसमभिव्याहारस्य वा तन्त्रत्वमित्यपि बोध्यम् । तेन धवखदिरौ नीलघटावित्यादौ नाभेदबोध इत्यपि बोध्यम् । न चैवं समासे सम्बन्धिनोऽभेदान्वयाद्विग्रहे च राज्ञः पुरुष इत्यत्र षष्ठ्यर्थसम्बन्धस्य भेदेनान्वयाद् वृत्तिवाक्ययोर्भिन्नार्थत्वापत्तेरकविधानेनेतरनिवृत्त्यनापत्तौ विभाषासूत्रवैयर्थ्यापत्तिरिति वाच्यम् । एकतरबोधस्यावश्यकत्वेनार्थैक्याभिप्रायात् । अतश्च षष्ठीतत्पुरुषे लक्षणापत्तेर्निषादश्चासौ स्थपतिश्चेति कर्मधारय एवायम् । तेन तावद्विषये विद्यामाक्षिप्यानाहिताग्नेरपि निषादस्यैवाधिकारः । अत एव ' कूटं दक्षिणा स्वं हि तन्निषादानाम् ' इति लिङ्गमपि सङ्गच्छते । तत्र च परप्रयुक्तोपजीवित्वादाहवनीयाद्यनाक्षेपेऽपि ' यत्र क्वचन होष्यन् स्यात् स पञ्चभूसंस्कारान् कृत्वा लौकिकाग्निं प्रतिष्ठापयेत् ' इति स्मृतिवचनेनाग्न्यन्तराभावे होममात्रोद्देशेन लौकिकाग्निविधानात्तमेव तत्तद्देशे स्थापयित्वा तस्मिन्निष्टिः कर्तव्येति ध्येयमिति ।

१ अथातोऽवकीर्णिप्रायश्चित्तममावास्यायां चतुष्पथे गर्दभं पशुमालभते निर्ऋतिं पाकयज्ञेन यजेताप्स्ववदानहोमो भूमौ पुरोडाशश्रपणं तां छविं परिदधीतोर्ध्ववालामित्येके संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्तयन्, अथापरमाज्याहुती जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा, कामाभिद्रुग्धो ( दुग्धो )ऽस्म्यभिद्रुग्धो ( दुग्धो )ऽस्मि कामकामाय स्वाहेत्यथोपतिष्ठते, सं मा सिञ्चतु मरुतः समिन्द्रः सम्बृहस्पतिः । सं माय-

अत्रैतद्विचार्यते—किं स्थपतीष्टिरवकीर्णी पशुश्चैतदुभयमाधानसंस्कृतेष्वाहवनीयादिषु भवति, उत लौकिक इति । तत्र प्रकृतित आहवनीयादिषु प्राप्तेराहवनीयादीनां चाधाननिष्पाद्यत्वास्थपतेरवकीर्णिनश्चाधानविध्यभावेऽपीष्टिपशू आधानं प्रयोजयतः । अत एतदर्थमेवाधानेनाहवनीयादीनुत्पाद्य तेषु तदुभयं कर्तव्यमिति प्राप्त आह—

**लौकिके ॥ १ । १ । १४ ॥**

एतौ स्थपतीष्ट्यवकीर्णिपशू लौकिकेऽग्नौ भवतः । कुतः ? नहीमाविष्टिपशू आधानं प्रयोजयतः; आभ्यां हि तदेव गृह्यते यद्दर्शपूर्णमासाङ्गं भवति ।

---

मग्निः सिञ्चतु प्रजया च धनेन चेत्येतदेव प्रायश्चित्तम् ॥ इति (पारस्करगृह्यसूत्रे तृतीयकाण्डे द्वादशी कण्डिका) रेणुकारिकास्वपि—अवकीर्णिप्रायश्चित्तमिदानीमभिधीयते । ब्रह्मचारी स्त्रियं गच्छेदवकीर्ण्युच्यते बुधैः ॥ पशुना गर्दभेनाधिक्रियते नैर्ऋतेनसः । शाखापशुविधानेन पशुः कार्यश्चतुष्पथे । न च श्राद्धार्थ आरब्धः पशुः प्रोक्तः प्रसङ्गतः ॥ आह नैमित्तिकं वक्तुमिति षष्ठ्यन्तरं मुनिः । पाकयज्ञो हविर्यज्ञः पशुरेष द्विधा मतः ॥ इहोच्यते पाकयज्ञः पाकयज्ञेन सूत्रणात् । अवकीर्णिन इत्यस्मिन् युक्तोऽधिकरणे यतः ॥ स्वयं कर्तृक आद्यः स्यात् परोऽध्वर्यादिकर्तृकः । लौकिके स्यादिदं कर्म काले चन्द्रमसः क्षये ॥ पुरोडाशविधानं स्यान्नशास्त्रात्पशुवच्चरुः । संस्कारानुष्ठितिस्तस्य सहाज्येनैव चोदिता ॥ भूमौ पशुः पुरोडाशः श्रप्यते प्रोक्षणादिषु । आदिशेन्निर्ऋतिं तत्र निर्ऋत्यै च निमन्त्रितः ॥ अप्सु होमोऽवदानानां पुरोडाशेन तैः सह । वपा स्विष्टकृतेस्तद्वत्तेषामग्न्युपवादतः ॥ आघारादि भवेद्ब्रह्मावाज्यसम्बन्धि कर्म च । अवकीर्णाद्य(कीर्णित्व)निःकृत्यै पाकयज्ञविधानतः ॥ पशुना गर्दभेनाहं यक्ष्य इत्थं गुरुं वदेत् । स्थापयेल्लौकिकं वह्निं भूमौ संस्कारपूर्वकम् ॥ तदुत्तरेणोदपात्रं तथा भूशुद्धिपूर्वकम् । होमार्थमवदानानां स्वा(चा)ध्यानाद्यपवर्गतः ॥ परिष्कृतिर्द्वयोरेका साधनत्वात्तथोभयोः । स्नापयित्वोपकरणे पशुसंस्कारकर्मवत् ॥ तच्छाखापशुवत्सर्वं वचनस्यातिदेशतः ॥ तदन्ते परिसन्धत्ते त्वचं (छविं) तामेव त (?) च्छुचिः । ऊर्ध्वं पुच्छं ब्रुवन्त्यन्ये, चरेद्भिक्षां हि वत्सरम् ॥ स्वकर्मजाद्यत्र तिष्ठेत्स्वपापं परिकीर्तयेत् । 'निरुक्तं वा एन एव कनीयो भवति' श्रुतेः ॥ संवत्सरान्ते पूतः सन्पुनस्तद्व्रतमाचरेत् । नैमित्तिकान्तरं तस्यावकीर्णिन इहोच्यते ॥ स्थापयित्वोद्धरेद्वह्निं लौकिकं न चतुष्पथे । वरणादि यथोक्तं स्यादाज्येनैवात्र हूयते । क्रमेण जुहुयादेता आघाराद्याश्चतुर्देश ॥ तेनाज्येनैव जुहुयादाहुती प्रतिमन्त्रतः । आद्या कामावकीर्णोऽस्मि काममिदंग्ध इत्यथ ॥

[1]नचाधानं दर्शपूर्णमासाङ्गम् । स्वकाले हि पुरुषसंस्कारत्वेन तद्विहितमिति । अतो लौकिकाग्नावेवैतावनुष्ठेयौ । लौकिकमेव गार्हपत्यं स्थापयित्वा तत आहवनीयादिस्थानेषु विहृत्य स्थपतीष्ट्यवकीर्णिपशू दर्शपूर्णमासपशुवत्कर्तव्यौ ॥१४॥

अत्र विशेषविधानार्थमाह—

## भूमौ पशुपुरोडाशश्रपणम् ॥ १ । १ । १५ ॥

अत्रावकीर्णिनो गर्दभपशुयागे पुरोडाशस्य श्रवणं भूमावेव कर्तव्यम्, न तु कपालेषु ॥१५॥

## अप्स्ववदानहोमः ॥ १ । १ । १६ ॥

अवदानानां हृदयजिह्वाक्रोडादीनां होमोऽप्सु उदकेषु भवति । अवदानग्रहणादन्यदाघाराज्यभागहोमादिकमग्नावेव कार्यम् ॥१६॥

## शिश्नात्प्राशित्रावदानम् ॥ १ । १ । १७ ॥

गर्दभस्य शिश्नात्प्राशित्रावदानं कार्यं वचनात् । न जौहवेभ्यो हृदयादिभ्यः ॥ १७ ॥

उक्तोऽधिकारः ।

( स्मार्तं कर्मोपासनाग्नौ कर्तव्यं नाहवनीयादिषु )

अथाग्निप्रस्तावादाहवनीयाद्यग्निषु किं किं कर्मकर्तव्यमित्यपेक्षायामाह—

## वैतानिकेषु सर्वं सर्वार्थत्वात् ॥ १ । १ । १८ ॥

वैतानिका वितानार्हा विहारयोगात्, गार्हपत्यादयः; तेषु वैतानिकेष्वग्निषु सर्वं कर्म श्रौतं स्मार्तं च कर्तव्यम् । श्रौतं च हविः, श्रपणहोमादिकम् । स्मार्तं च पक्षादिनिपात्यपाकप्रकाशादिकम् । कुतः ? सर्वार्थत्वात् । यतो गार्हपत्यादयो वैतानिकाः सर्वार्थाः । कुतः ? यद्धि द्रव्यमुत्पत्तिकाले केनचिदर्थेनासंयुक्तमुत्पद्यते तस्य सर्वार्थतावसीयते । कुतः ? सामर्थ्यात्, सर्वार्था हि गार्हपत्यादयः सर्वं कर्म साधयितुम् । आधानेनोत्पादितानामग्नीनां प्रयोजनापेक्षायां

---

तमग्निरुपतिष्ठेत समासिञ्चत्विति ब्रुवन् । प्राशनादि ततः कुर्यात्प्रणितानां विमोकतः ॥ एतदेव भवेत्प्रायश्चित्तं नान्यत्सुनिश्चितम् । सावकीर्णिन इत्यस्मिन्ब्रुन्निदं तत्रापि पाक्षिकम् ॥ इति ॥ अचिरादेव प्राकश्यमेष्यति रेणुकारिका ।

१ पूर्वतन्त्रे तृतीयाध्याये षष्ठपादे चतुर्थपञ्चमाधिकरणे द्रष्टव्ये ।

सामर्थ्येन न सर्वाग्निकार्यार्थता विज्ञायते, तस्माच्छ्रौतं स्मार्तं च यद् गृह्यसूत्रोक्तम्, स्मृत्युक्तं च पाकादिकं तत्सर्वं गार्हपत्यादिषु भवतीति ॥ १८ ॥

## दर्शनाच्च ॥ १ । १ । १९ ॥

दृश्यते चायमर्थो यत्स्मार्तमपि होमपाकादिकं वैतानिकेषु क्रियत इति । दक्षिणाग्निं प्रकृत्य श्रूयते—"मांसं तु तत्र न पचयेयुः" इति । अत एव प्रतिषेधात्प्राप्तिरनुमीयते, प्रतिषेधस्य प्राप्तिपूर्वकत्वात् । नच श्रौतो मांसपाको दक्षिणाग्नौ विहितोऽस्ति, तस्यैव प्रतिषेधः स्यात्, यतः स [1]शामित्रेऽग्नौ विहितः । अस्तित्वविहिताप्रतिषिद्धः स्मार्तो मांसपाकः, तस्यायं प्रतिषेधो विज्ञायते । स्मृतावपि दर्शश्राद्धं प्रकृत्याग्नौकरणार्थमग्निमाह मार्कण्डेयः—

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः ।
अनाहिताग्निस्त्वौपासनेऽन्यभावे तथाप्सु (स्तु ?) वा ॥ इति ।

शङ्खलिखितौ—"धूपगन्धमाल्यैरलङ्कृत्य ब्राह्मणान् सघृतमन्नमनुप्राप्य दभ दक्षिणाग्निं परिस्तीर्य जुहुयादग्नये कव्यवाहनाय" इत्यादि ।

वायुपुराणेऽपि—

आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः । इति

अतोऽस्माद्दर्शनात्स्मार्तमपि वैतानिकेषु कर्तव्यमिति पूर्वः पक्षः ।

सिद्धान्तमाह—

## [2]नौपासनश्रुतेः ॥ १ । १ । २० ॥

यदुक्तं वैतानिकेष्वेवाग्निषु श्रौतं स्मार्तं च कर्तव्यमिति, तत्र, कुतः ? औपासनश्रुतेः । यतः, अहिताग्नेरपि औपासनः श्रूयते पितृमेधे "अद्वारेणौपासनं निरस्यति" इति । यदि स्मार्तमेव वैतानिकेषु क्रियेत, तदाऽऽहिताग्नेः पितृमेधे औपासनदर्शनं न स्यात् । अस्ति च । तस्मात्तान्यौपासने कर्तव्यानीति ।

---

१ शामित्रः पशुश्रपणोग्निरुच्यते, तथा चापस्तम्बः—अभिपर्यग्निकृते देश उल्मुकं निदधाति स शामित्रः । २ कात्यायनश्रौतसूत्र एव वक्ष्यत्येकविंशाध्याये चतुर्थकण्डिकायामेकोनत्रिंशत्तमं सूत्रम् । ३ अत्र पूर्वतन्त्रोक्तं विहाराग्नेर्वैदिककर्ममात्रताधिकरणं (१२।२।१) अनुसन्धेयं विशेषजिज्ञासुभिः ।

तथा च ( याज्ञवल्क्य )स्मृतिः—

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥ इति ॥

'तस्मिन् गृह्याणि' इत्यापस्तम्बस्मरणाच्च । अतश्च यत्किञ्चिद्दम्पत्योर्विहितं कर्म शान्तिकपौष्टिकव्रताङ्गहोमादिकं स्मार्तं तत्सर्वमावसथ्येऽग्नौ भवतीति ।

अत एवाह कात्यायनः—

न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् ।
स्वस्य गर्भक्रियार्थांश्च यावन्नासौ प्रजायते ॥
अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः ।
न हि पित्रा समानीतः पुत्रस्य भवति क्वचित् ॥

अतश्च सीमन्तोन्नयनमपि स्मार्ताग्नावेव कार्यम् ।

अपिच, आधानेनोत्पादितानां गार्हपत्यादीनामग्नीनां प्रयोजनापेक्षायां सत्यां गार्हपत्ये हवींषि श्रपयन्त्याहनीये जुह्वति, दक्षिणाग्नावन्वाहार्थं पचन्तीति प्रत्यक्षवचननिर्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणां न सामर्थ्यमात्रेणोक्तादन्यत्र विनियोगः कल्पयितुं शक्यते ।

ननु माभूत्सामर्थ्यमात्रेण विनियोगः, वाक्येनैव स्मार्तेष्वपि पार्वणस्थालीपाकादिहोमेषु भवत्विति चेत्, न; न च स्मार्तहोमास्तेषु विधातुं शक्याः, ते हि सहैवाधानेनवसथ्येनोत्पाद्यन्ते, यथा होमादयः ।अत्राह जैमिनिः "सति चौपासनस्य दर्शनात्" ( १२-२-१-४ ) इति । सति च विहारे औपासनोऽग्निर्दृश्यते । "यः कामयेत राष्ट्रमस्यै प्रजायै स्यादिति तस्यौपासने प्रजुहुयात्" इति राजसूये प्रवृत्ते कर्मण्येतद्वचनम् । तस्मिंश्च काले विहारोऽस्ति । यदि च विहार एव स्मार्तान्यपि कर्माणि स्युस्तदा कार्याभावादौपासनदर्शनं न स्यात् । अस्ति च । तस्मात्स्मार्तान्यौपासन एव कार्याणि ॥ २० ॥

यद्येवं तर्हि मांसपाकप्रतिषेधस्य का गतिरित्यत आह—

**अधिश्रपणीये माꣳसप्रतिषेधः ॥ १ । १ । २१ ॥**

य एष उक्तो मांसपाकप्रतिषेधो "माꣳसं तत्र न पचयेयुः" इति सोऽधिश्रपणीयेऽहनि ज्ञेयः। नवगृहे यदा वासः क्रियते तदा तस्मिन्नेवाहनि । तत्र

दक्षिणाग्नेराहरणं कार्यं नाहवनीयवत्प्रतिहोममिति विकल्पं वक्ष्यति–"नवावसिते वा" इति । श्रूयते च–" नवावसिते वैनमाहरेयुः " इति । तदा च तस्मिन्नवगृहे दक्षिणाग्नावविशेषेण भोजनार्हस्यानियतद्रव्यस्य पाको विहितोऽस्ति " तस्मिन्पचेयुस्तद्ब्राह्मणा अश्नीयुः" इति । तत्र कदाचिन्मांससम्पत्तौ तस्यापि पाकस्तत्र प्राप्नोति तस्यैष प्रतिषेधो ' माꣳसं तत्र न पचेयुः ' इति ।

पक्षान्तरमपि दुग्धाधिश्रयणरूपमेतस्य विद्यते " यद्युतं न विन्देद्यत्पचेदपि गोरेव दुग्धमधिश्रयीत वै ब्रूयात् " इति । तेनाधिश्रयणं सम्बन्धि अहः अधिश्रयणीयम्, तस्मिन्नधिश्रयण इति । अनेन च सम्बन्धि दक्षिणाग्न्याहरणदिनं लभते । अतः श्रौतान्येव वैतानिकेषु गार्हपत्यादिषु कर्तव्यानि । स्मार्तानि त्वावसथ्येऽग्नावेवेति सिद्धम् ।

यत्तु स्मृतौ दक्षिणाग्नावग्नौकरणहोम उक्तः, स सर्वाधानपक्षे त्वावसथ्याग्नावेवेति तत्रैव निर्णीतमास्त ॥ २१ ॥

॥ इति प्रथमा कण्डिका ॥

कर्मणां फलवत्त्वोक्तिपूर्वकं तेष्वधिकारो निरूपितः । अधुना तस्यैव साङ्गस्य फलवतः कर्मणो निरूपणमाह—

( यागस्वरूपनिरूपणप्रतिज्ञा )

**यज्ञं व्याख्यास्यामः ॥ १ । २ । १ ॥**

यज्ञो यागो यजनमिष्टिरिति पर्यायाः । यज्ञं यागं व्याख्यास्यामः, यागस्वरूपं कथयिष्यामः ॥१॥

( यागस्वरूपनिरूपणम् )

तदेवाह—

**द्रव्यं देवतात्यागः ॥ १ । २ । २ ॥**

द्रव्यं देवतात्यागो यज्ञः । द्रव्यं पुरोडाशचरुसान्नाय्यपशुसोमादिकम् । देवता अग्निसोमेन्द्रविष्ण्वादिकाः । तद्धितचतुर्थी मन्त्रवर्णान्यतमा बोध्या । तत्राग्न्यादिकां देवतामुद्दिश्य यो द्रव्यस्य पुरोडाशादेस्त्याग उत्सर्गः स यज्ञः स याग इत्यर्थः । तथा चोक्तम्–

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते ।
देवतासङ्गतिस्तत्र दुर्बलं तु परं परम् ॥ इति ।

तत्र तद्धितेन देवता सङ्गतिर्यथा—आग्नेयोऽष्टाकपालः, अग्नीषोमीय उपांशुयागः, अग्नीषोमीयः पुरोडाशः, ऐन्द्राग्नः पुरोडाशः, ऐन्द्रं दधि, ऐन्द्रं पयः, 'अग्नीषोमीयं पशुमालभेत' इत्यादौ ।

चतुर्थ्यां देवतासङ्गतिर्यथा—अग्नयेऽनीकवतेऽष्टाकपालम्, मरुद्भ्यः सान्तपनेभ्यः, अथ मरुद्भ्यो गृहमेधिभ्यः, इत्यादौ ।

मन्त्रवर्णेन देवतासङ्गतिर्यथा उत्तराघारे, यथाच प्रयाजेषु ।

क्वचित्प्राकरणिकदेवतासम्बन्धोऽपि भवति तद्धितादीनामभावे, यथा—उलूखले मुसल इत्यत्र कर्काचार्याणां....(?)

अत एवोच्यते यास्केन "यद्यनादिष्टदेवतामन्त्रास्तेषु यद्देवतोपरिष्टाद्यद्दैवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति" इत्यादि । तेनैतत्सिद्धम्—देवतोद्देशेन द्रव्यत्यागो यागः । स एव प्रक्षेपाधिको होम इति ॥२॥

( अफलयुक्तानामयागहोमरूपाणां यागाङ्गत्वनिरूपणम् )

अथाङ्गत्वावेदकं प्रमाणद्वयमाह—

## तदङ्गमितरत्समभिव्याहारप्रकरणाभ्याम् ॥ १ । २ । ३ ॥

पूर्वसूत्रे निरूपितात्प्रधानभूताद्यज्ञोद्देशेन द्रव्यत्यागात्मकादि यदुद्धरणाग्न्यन्वाधानब्रह्मवरणव्रतग्रहणादिकं, तत्सर्वं तदङ्गम्, तस्य पूर्वसूत्रोक्तस्य देवतोद्देशेन द्रव्यत्यागात्मकस्यार्थात्प्रधानभूतस्य यागस्याङ्गमुपकारकं भवति। धर्मः शेषोऽङ्गं गुण इत्येकार्थाः ।

कुतः कारणदङ्गं भवतीत्यपेक्षायामाह—समभिव्याहारप्रकरणाभ्याम् । 'सम्' शब्दो योग्यतासन्निधिवाचकः, 'अभि' इत्याकाङ्क्षायाम् ; तेनायमर्थः—समिति योग्यतासन्निधिमतामभीत्याकाङ्क्षावतां पदाभ्यां व्याहार उच्चारणं समभिव्याहारो वाक्यम्, तस्माद्वाक्यात्, प्रकरणाच्चेत्यर्थः ।

तत्र वाक्यस्य तावदुदाहरणम्—" पौर्णमासेनेष्ट्वेन्द्राय विमृधेऽनुनिर्वपति " इति । *प्रकरणपाठाद्वैमृधस्योभयाङ्गत्वे प्राप्ते वाक्यात्पौर्णमासाङ्गता भवति । अत्र च ×शेषशेषिणोः साध्यसाधनभावो न श्रूयते । पदद्वयसमभि-

* तार्तीयं श्रुत्यधिकरणमत्रानुसन्धेयम् । ×शेषः परार्थत्वादित्युक्तेः पारार्थ्यमेव शेषलक्षणम् ।

व्याहारादेव योग्यत्वमालोच्य शेषशेषित्वं कल्प्यते । यथा 'स्वर्गकामो यजेत' इति । अत्र वाक्येन विनियोग इति । न ह्यत्र स्वर्गस्य साध्यत्वं केनचिदुपात्तम्। अतः पदद्वयसमभिव्याहारादेव कल्प्यते ।

प्रकरणं चोभयाकाङ्क्षा । तथाहि—दर्शपूर्णमासाभ्यां स्वर्गं साधयेत् । कथमित्येतस्यामाकाङ्क्षायामविद्यमानायां च श्रुतप्रयोजनान्यग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि कर्माणि पठ्यन्ते । दर्शपूर्णमासयोश्चोपकारकापेक्षा, अग्न्यन्वाधानादीनां चास्माभिः किं कर्तव्यमिति कार्यापेक्षा । न च दर्शपूर्णमासयोरुपकारकं किञ्चिद्दृश्यते, न चाग्न्यन्वाधानादीनामपि कार्यं किञ्चिद्दृश्यते, अवश्यमुभयेनापि कुतश्चिद्भवितव्यम् । यदि तु केनचित्प्रमाणेन ज्ञायते तदा नास्तीति बुद्धिर्भवति, अस्ति च प्रमाणम् । न ह्यत्यन्तसन्निकर्ष एव सम्बन्धकारणम् । यदा सन्निकृष्टं न लभ्यते, तदा विप्रकृष्टे वेदस्याशक्तिः सञ्चरति । तदिहोपकारककल्पनाप्रमाणं सन्निकृष्टं श्रुतिलिङ्गवाक्यलक्षणप्रलब्धाविकृष्टमभ्यनुज्ञातमित्युभयाकाङ्क्षावशेनैवं विज्ञायते—यद्दर्शपूर्णमासावुपकारमाकाङ्क्षतः, स नूनमेभिरग्न्यन्वाधानादिभिः क्रियते । यच्चाग्न्यन्वाधानादयः कर्तव्यमपेक्षन्ते तद्दर्शपूर्णमासयोरुपकार इति । नह्युभयोरन्यत्सन्निकृष्टतरमस्ति । यच्चान्यत्फलादि कल्प्येत तस्यान्येन सह सम्बन्धेन निराकाङ्क्षीभूतस्य नेह सम्बन्धाकाङ्क्षा विद्यते । तेनाग्न्यन्वाधानादीनां न विश्वजिदादिवत्फलकल्पनम् , नापि दर्शपूर्णमासानुषङ्गः । उभयाकाङ्क्षालक्षणसम्बन्धाभावे ह्यन्यतराकाङ्क्षालक्षणः सम्बन्धो गृह्यते, न सम्भवे; तस्मान्नष्टाश्वदग्धरथवदेव परस्परनियमः, सिद्धिः ।

किञ्चाग्न्यन्वाधानादेः फलान्तरकल्पने क्रतुक्रत्वोः फलमित्युपकारकाकाङ्क्षाऽनिवृत्तैव स्यात् । अस्ति चासावाकाङ्क्षा, यागेन स्वर्गं कुर्यादित्येवं करणत्वेन विधानात् । तदुक्तम्—

न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यता साध्ये यस्य नानुग्रहेऽर्पिता ॥ इति ।

एवमुभयाकाङ्क्षावत्त्वे सति सम्बन्ध प्रतिपादकं वाक्यं कल्प्यते । अग्न्यन्वाधानादिभिरुपकृतेन यागेन स्वर्गं कुर्यादित्येवम् । ततो वाक्याल्लिङ्गमग्न्यन्वाधानादिगतं सामर्थ्यं कल्प्यते । लिङ्गाच्च विनियोक्त्री श्रुतिः कल्प्यते । एभिः प्रधानस्योपकारः कार्य इति ।

ननु सूत्रकारेणाङ्गत्वे प्रमाणद्वयमेव कथमुक्तम् ? जैमिनिना तु *श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यासंज्ञानि षट् प्रमाणान्युक्तानि सन्ति। नैष-दोषः । प्रमाणचतुष्टयस्यसोदाहरणस्याग्रे ×वक्ष्यमाणात् ।

तत्र स्वार्थाभिधाने +निरपेक्षं वचनं श्रुतिः । सा त्रिविधा-[१] विधात्री, [२] अभिधात्री, [३] विनियोक्त्री च ।

तत्र विनियोक्त्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । विनि-योक्त्री त्रिधा—[१] एकाभिधानरूपा, [२] एकपदरूपा, [३] विभक्तिरूपा च । यस्य च श्रवणादेव सम्बन्धः प्रतीयते सा विनियोगश्रुतिः । तत्र, यत्राने-कार्थाभिधानमेकेन शब्देन युगपद्भवति विभक्त्यैव लिङ्गसङ्ख्याकारकाणां तत्र तेषामन्वितानामेवाभिधानं तदेकाभिधानम् । यथा पशुनेति पशुः प्रतीयते तथैक-त्वं च । अतः सङ्ख्यादेरेकशब्दोपादानलक्षणया श्रुत्या कारकसम्बन्धः । प्रति-पदिकार्थस्य तु पदश्रुत्या । यजेतेत्यत्र यागस्य प्रकृत्यर्थस्यैकपदेनोपात्ततया याग-स्य प्रकृत्यर्थस्यैकपदेनोपात्ततया स्वर्गादिकं प्रति करणत्वम्, विभक्तिस्तु सम्ब-न्धमेव साध्यत्वं वा प्रतिपादयन्ती विनियोगकरणम् । तत्र द्वितीया साध्यत्वं प्रतिपादयति, तृतीयादयस्तु साधनत्वम् । तत्र "व्रीहीनवहन्ति" इति द्वितीया साध्यत्वेन व्रीहीनभिदधानावघातस्य तेषु विनियोगकारणं भवति ।

सर्ववस्तु ÷सामर्थ्यं लिङ्गम् । तद्यथा-"स्रुवेणावद्यति" "स्वधितिना-वद्यति" "हस्तेनावद्यति" "कोष्ठेनावद्यति" इति अवदानसाधनत्वेन श्रु-तानां लिङ्गेन वस्तुसामर्थ्यात्मकेन विशेषविनियोगो भवति । तदुक्तम्—

सामर्थ्यात्स्वधितिर्मांसे द्रवेषु स्यात्स्रुवस्तथा ।
हस्तकेन पुरोडाशमवदातुं प्रकल्प्यते ॥

मन्त्राणां च लिङ्गेन पदार्थस्मारकत्वे विनियोगः ।

वाक्यं तु पदसङ्घातात्मकं प्रागुक्तम् ।

---

* तृतीयाध्याये । × तत्तत्स्थलेषु । +श्रुतिर्नामाङ्गत्वघटकीभूतोद्दश्यताकृतिका-रकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः । ÷लिङ्गं नामाङ्गत्वघटकीभूतपरोद्दश्यताकृ-तिकारकत्ववाचकपदकल्पनानुकूला क्लृप्त पदपदार्थनिष्ठा योग्यता । ₹ समभिव्याहारो वाक्यम् ।

प्रकरणं चोभयाकाङ्क्षारूपं प्रागुक्तमेव ।

× स्थानं क्रमः । तद् द्विविधम् । पाठसादेश्यम्, अनुष्ठानसादेश्यं च । पाठसादेश्यमपि द्विविधम् । यथासङ्ख्याम्नानम्, सन्निध्याम्नानं च । तत्राग्निषोमीयानुष्ठानदेशे पशुधर्माणामाम्नानादग्निषोमीयार्थत्वमनुष्ठानसादेश्य-रूपेण स्थानप्रमाणरूपेण भवति । यत्र च ब्राह्मणक्रमेणाश्वगर्दभाजानामभिम-न्त्रणानि विहितानि, संहितायां च तस्मिन्नेव क्रमेऽभिमन्त्रणमन्त्राः पठिताः प्रतूर्तमित्यादयः; तत्र यथासङ्ख्याम्नानेन सम्बन्धो भवति । एवमेव शाखान्त-रब्राह्मण आध्वर्यवकाण्डे दर्शपूर्णमासयोस्त्रय आग्नेयादयो यागाः क्रमेण पठिताः। यजमानकाण्डे च त्रीण्यनुमन्त्रणानि पठितानि । तद्यथा—अग्नेरहं देव यज्ययान्नादो भूयासम् । अदब्धिर्नामास्य दब्धोहं भ्रातृव्यं दभेयम् । अग्नीषामौ वृत्रहणौव अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् । इति । दब्धिर्यानकर्मायुधम्। यावति प्रदेशे ब्राह्मणे प्रधानं पठ्यते तावत्येव मन्त्राः । तयोश्चाङ्गाङ्ग्यपेक्षावेलायां यथासङ्ख्यन्यायेन समानदेशत्वाद् बुद्धौ सन्निधानं भवति । प्रथमस्य हि प्रधानस्य मन्त्रमन्विच्छन्नवश्यं मन्त्रसमाम्नायमादित आरभ्यालोचयति, ततश्च प्रथमो मन्त्रः प्रथमं हृदयमागच्छति, न चास्यातिक्रमे हेतुरस्तीति स एव गृह्यते। तथा मन्त्रस्य शेषिणमपेक्ष्यमाणस्य तथैव प्रक्रिययाऽऽद्येन शेषिणा सह सम्बन्धो भवति । ततश्च तन्निराकाङ्क्षया द्वितायादीनामप्येवमेव द्वितीयादिभिरेव योगः। तत्राग्नेयाद्यनुमन्त्रणानामाग्नेयादिलिङ्गत्वात्तेनापि व्यवस्था सिद्ध्यतीत्यथोक्तंलिङ्गमुपांशुयागक्रमाधीतः 'अदब्धिर्नामास्य दब्धोऽहं भ्रातृव्यं दभेयम्,' मन्त्र उदाहरणम् ।

नन्वस्य प्रकरणात्सर्वार्थत्वं विज्ञायते, तस्य च क्रमाद्बलीयत्वात्कथमस्योपांशुयागाङ्गत्वमिति ? उच्यते—येऽन्ये शेषिण आग्नेयादयस्ते विस्पष्टलिङ्गत्वे वैषम्याददृष्टार्थानां समुच्चय इति, चेत्, नः प्रकृत्ययागप्रत्यवेक्षणेन दृष्टार्थत्वात् । सत्यपि चादृष्टार्थत्वे निरपेक्षाणां गत्यन्तरे सति समुच्चयानाश्रयणादाग्नेयादिभिः। कृतार्थैरुपेक्षितः सन्नगत्या पुनस्तेष्वेव भवेत। अस्ति चास्य गतिरुपांशुयाज इति। किञ्च, "न वा विज्ञानलिङ्गानां प्रक्रिया विनियोजिका । अस्तीत्यस्य च सामर्थ्यै सन्निधावुपसंहृतम् " अदब्धिर्नामासीत्यस्य स्पष्टलिङ्गोऽयम् । नचेदृशं सन्तं प्रकरणं विनियोक्तुंक्षमम् । अयमपि शब्दो युष्मदर्थ विषयत्वात्सन्निहितमभिमुखं

×देशसामान्यं स्थानम् ।

चाभिधत्ते, नान्यम् । उपांशुयाजश्च सन्निहितोऽभिमुखश्चेत्यभिधानसामर्थ्यं क्रमादुपांशुयाजविषयकं विज्ञायते । ततश्च लिङ्गेन प्रकरणं बाध्यत एवेत्यदोषः । अतः *कर्कोक्तं न किञ्चित् । पितृभूत्युक्तमेव सुष्ठु । सन्निधावाम्नानेनापि विनियोगो भवति । विकृतौ पदपूर्वमङ्गं पठ्यते तदपि मया किं कर्तव्यमित्येवं साकाङ्क्षं भवति, प्रधानस्य तु प्राकृतैरङ्गैर्निराकाङ्क्षस्य तदपेक्षा यद्यपि नास्ति, तथापि तस्यापूर्वाङ्गस्यानर्थक्यपरिहाराय तत्प्रधानस्यापेक्षां परिकल्प्य तस्य सम्बन्धः क्रियते । यथा देवसु हविरादीनामुपहोमादीनां च ।

समाख्या यौगिकी संज्ञा । हौत्रमाध्वर्यवमौद्गात्रमित्यादिका वैदिकी, प्रोक्षणीरित्यादिका लौकिकी च । तत्राध्वर्युर्ष्टतमात्र एवमपेक्षते मया किं कर्तव्यमिति, तदपेक्षमाणस्य यदि न कुतश्चिद्विशेषोऽवगम्यते, ततो यत्किञ्चिदिति भविष्यमिति । तथाध्वर्यवसंज्ञितं कर्म को मे कर्ता भविष्यतीत्येवमेव विशेष्यमपेक्षते । तत्र शब्दार्थज्ञः स्यादित्ये वैषोत्प्रेक्षा प्रत्येकं भवति । यदस्याध्वर्योः कर्म, तदाध्वर्यवशब्दवाच्यं भवति । तथा स्यादाध्वर्यवस्य यः कर्ता तस्याध्वर्युर्नामेति । एवं सर्वसमाख्यासु वाच्यम् ।

सूत्रकारेण चैतानि प्रमाणानि स्वस्वविषये उक्तानि । तथाहि—"काष्ठं हिरण्यं वाभिजुहुयाच्छ्रुतेः" इत्यत्र श्रुतिः काष्ठहिरण्ययोर्विनियोजकत्वेनोक्ता ।

---

*अत्र कर्कभाष्यं यथा—क्रमस्तु द्विप्रकारः । सन्निधानलक्षणो यथासङ्ख्यलक्षणश्च तत्र यः सन्निधानलक्षणः स विकृतिविषयः । अन्यतराकाङ्क्षोऽपि हि तत्र सम्बन्धो भवति । विकृतिसन्निधौ यदपूर्वमङ्गमाम्नायते तत्साध्यभावात्साकाङ्क्षम्, तस्यानर्थक्यं माभूदिति वैकृतस्य प्रधानस्य तत्प्रत्यपेक्षा कल्प्यते । सोऽयमन्यतराकाङ्क्षालक्षणक्रमः । तेनापि विनियोगो ज्ञापित एवाचार्येण । यथा विदेवनादीनामभिषेचनीये । यथासङ्ख्यलक्षणेनापि विनियोग उक्त एव । यथा "कार्ष्मर्यवानस्पत्यमार्तिकैरभिचारब्रह्मवर्चसप्रतिष्ठाकामा यथासङ्ख्यम्" इति । समाख्ययापि च विनियोगो ज्ञापित एव "शेषमितरे यथाख्यम्" इति अतो विनियोगप्रमाणद्वयमेवात्राभिहितम् । यच्च पितृभूत्याचार्येण यथासङ्ख्यलक्षणक्रमं प्रकृत्योपांशुयाजे "दब्धिर्नामास्यदब्धोऽहं भ्रातृव्यं दभेयम्" इत्यस्य विनियोग उक्तः, तन्नातीव शोभते । प्रकरणिभिरपि आग्नेयोपांशुयाजाग्नीषोमीयैस्तदपेक्ष्यते । तेन प्रकरणेनानुमन्त्राणसम्बन्धः । तद्यदि विशेषे व्यवस्थाप्यते क्रमेण, प्रकरणं बाधितं स्यात् । यथासङ्ख्यलक्षणेन विनियोगः प्रदर्शित एव—"कवचिनिषङ्गिकलापिदण्डिनो यथासङ्ख्यम्" इत्येवमादि ।

तेषामारम्भेऽर्थतो व्यवस्थानवचनत्वादिति । "मन्त्रलिङ्गाच्च" इति च लिङ्गमुक्तम् । "वत्सजानुं त्रिवृतं मूतकार्यं वा पशुब्रह्मवर्चसान्नाद्यकामा यथासङ्ख्यम्" इति यथासङ्ख्यरूपं स्थानमुक्तम् । "प्रयोजेषु सन्निधेर्दर्गुमेवासन्निधेः" इति सन्निधिपाठलक्षणं स्थानम् । "शेषमितरे यथासङ्ख्यमुनेतोन्नयति समाख्यानात्" इति समाख्या ।

एतेषां श्रुत्यादीनां परस्परविरोधे, उत्तरोत्तरस्य दौर्बल्यम् । तदुक्तं जैमिनिना—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति । तत्र श्रुतिलिङ्गयोर्विरोधे "अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशने" इति । अत्र श्रुतिः "प्रत्येत्याग्निमुपतिष्ठते यद्वेत्योपतिष्ठते यं वै लोको गार्हपत्ये" इति । निवेशन इति । शाखान्तरे च "ऐन्द्र्यागार्हपत्यमुपतिष्ठते" इति । तत्रेन्द्रो न तस्थाविति मन्त्रगतेन लिङ्गेनेन्द्रस्योपस्थापनं प्राप्नोति । अग्निमिति द्वितीयाविभक्तिश्रुत्या तु गार्हपत्यस्य । तत्र श्रुतिः साक्षाद्विनियोक्त्री लिङ्गश्रुतिमनुमाय तद्द्वाराविनियोजकमिति विप्रकर्षाद्दुर्बलम् । तेन श्रुत्यैव गार्हपत्यस्योपस्थाने विनियोगः । गार्हपत्यमिति गार्हपत्यचितिरूपोऽग्निः । कुतः प्रत्येत्याग्निमुपतिष्ठत इति प्रकृत्य "एतद्वा एतदयमथायं करोति यदग्नौ सामिचित एतां दिशमेति तस्मा एवैतं निह्नुते ।हिंसायै" इति । "अथ यं वै लोकगार्हपत्यै" इति च वाक्यशेषात् ।

एवं लिङ्गवाक्ययोर्विरोधे लिङ्गं बलवत् । वाक्यप्रकरणविरोधे वाक्यम् । प्रकरणस्थानयोर्विरोधे च प्रकरणम् । स्थानसमाख्ययोर्विरोधे च स्थानमिति ॥३॥

तदङ्गमितरदित्यत्रेतरदित्यनेन न पूर्वसूत्रप्रतिपादितदेवतोद्देशपूर्वकद्रव्यत्यागात्मकयज्ञादन्यल्लभ्यते; तेन देवतोद्देशपूर्वकद्रव्यत्यागात्मकानां प्रयाजादियागानां पूर्वाघारादिहोमानां वाऽनेन नाङ्गत्वं सिद्ध्यतीत्यत आह—

(अफलयुक्तानां यागहोमरूपाणामपि यागाङ्गत्वम्)

## यजतयश्चाफलयुक्तास्तदङ्गम् ॥ १ । २ । ४ ॥

फलेन युक्ताः फलवन्तः, न फलयुक्ता अफलयुक्ता यजतयः प्रयाजादियागाः, चकारात्पूर्वाघारादियुक्ता जुहोतयश्च तदङ्गम्; तस्य फलवतो यागस्य प्रधानस्याङ्गम्, उपकारका भवन्ति ।

ननु "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनेन यागमात्रस्य फलसम्बन्ध उक्तः, कुतोऽफलयुक्ता यजतय इति ? अत्रोच्यते--नात्र यागमात्रस्य फलसम्बन्ध उच्यते । किं तर्हि, ? ये यागा दर्शपूर्णमाससंज्ञास्तेषामेव । के च ते दर्शपूर्णमाससंज्ञाः ? ये दर्शपूर्णमाससंयोगेनोत्पन्नाः । तद्यथा—" आग्नेयोष्टाकपालः पौर्णमास्याममावास्यायां चाच्युतो भवति" इत्याग्नेयस्य दर्शपूर्णमाससंयोगेनोत्पत्तिः । तथा "तावब्रूतामग्नीषोमावाज्यस्यैव नोपांशु पौर्णमास्यां यजन्" इति उपांशुयाजस्य पौर्णमासयोगेनोत्पत्तिः । " ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमास्यां प्रायच्छत्" इत्यग्नीषोमीयस्य च । तथा—"ऐन्द्रं दध्यमावास्यायाम्" "ऐन्द्रं पयोमावास्यायाम्" इत्यनयोर्दर्शसंयोगेनोत्पत्तिः । अमावास्यां प्रकृत्य "तस्मादैन्द्राग्नोद्वादशकपालः पुरोडाशो भवतीत्यैन्द्राग्नस्य च । एते चाग्नेयादयो यागा दर्शपूर्णमाससम्बन्धाद्दर्शपूर्णमासपदेन लक्ष्यन्ते । तेषामेव च फलसम्बन्धोऽनेन "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्येन क्रियते । अत एव फलवन्तः प्रधानभूताश्च । इतरे प्रयाजादयो निष्फलाः । अतः फलवतां प्रधानभूतयागानामङ्गं भवति, उपकारका भवन्ति, प्रकरणात् । तदुक्तं "फलवत्सन्निधावफलं तदङ्गम्" इति । तदङ्गमित्यनुवर्तमानेऽपि पुनस्तदङ्गग्रहणं प्रयाजादीनां केवलादृष्टार्थत्वज्ञापनार्थम् । इतराणि चाङ्गानि कानिचिद्दृष्टार्थानि, कानिचिदुभयार्थानि । प्रयाजादीनित्वदृष्टार्थान्येव भवन्ति । तदुक्तम्—

दृष्टादृष्टोभयार्थं वा त्रिधाङ्गानि प्रचक्षते ।
दृष्टार्थानि चतुर्धास्युर्जातिद्रव्यगुणक्रियाः ॥
अदृष्टार्थं द्विधा कर्म द्वयार्थमपि तन्मतम् ।
दृष्टार्थेष्वपि सर्वेषु नियमादृष्टमिष्यते ॥ इति

त्रिविधमङ्गजातं दृष्टार्थमदृष्टार्थमुभयार्थमिति । दृष्टार्थमपि जातिद्रव्यगुणक्रियात्मकम् । तत्र जातिगुणौ " पशुना यजेत " "अरुणया क्रीणाति " इति क्रियासाध्यत्वेन विनियुक्तौ । तत्साधनद्रव्यावच्छेदेन दृष्टेनैवोपकारेण तस्याः शेषभावमनुभवतः । द्रव्यस्य तु साक्षादेव क्रियानिर्वृत्तिर्दृष्टमेव प्रयोजनम् । क्रियापि चावघातादिर्दृष्टार्थैव । या सन्निपत्योपकारकरूपत्वेनोच्यते । अदृष्टार्थत्वं तु क्रियाया एव । सा च द्वेधा । सन्निपत्त्योपकाररूपा प्रोक्षणादिका । आरादुपकाररूपा प्रयाजादिका । सन्निपत्त्योपकारकाणि च दृष्टार्थानि कर्माणि स्वकारकाणां कर्मादीनामुत्पत्तिं प्राप्तिं विकारं वा कुर्वन्ति, तत्साध्यस्य प्रधानस्योपकुर्वन्ति ।

तथा सम्पवनं पिण्डस्योत्पत्तिं दोहनं पयसः प्राप्तिम् । अवघातो व्रीहीणां विकारमदृष्टार्थं तु सन्निपाति संस्कारं स्वकारकस्य कुर्वत्प्रधानेनोपकारि भवति । तदेवमुत्पत्त्यादिसाध्यभेदात्सन्निपाति चतुर्विधं भवति । तच्च कर्मादीनामन्यतमे कारके यथायथमुत्पत्त्यादि करोति । कर्मण्यवघातः । कर्तरि व्रतम् । करणे प्रयाजे शेषाभिधारणम् । सम्प्रदाने पशुपुरोडाशयागः । अपादाने "अग्नेस्तृणान्यपचिनोति" इति । अधिकरणे दध्यानयनम् ।

आरादुपकारकं तु न कारकद्वारम् । अपूर्वधारं तु प्रधानस्योपकरोतीति । दृष्टादृष्टार्थं च किञ्चित्कर्म, यथा पशुपुरोडाशयागः । स हि त्यागांशेनादृष्टमुपदेशांशेन देवतास्मरणं करोतीत्युभयार्थः । एवमेव स्विष्टकृद्यागादयोऽप्युभयार्थाः। तत्रापि त्यागांशेनादृष्टमुत्पद्यते । प्रधानयागोपयुक्तहविरुत्तरार्धा च प्रतिपाद्यते ॥४॥

यजतयश्चाफलयुक्ता इत्यत्र यजतिजुहोतयः प्रस्तुताः, अतस्तयोर्विवेकं पृच्छति—

**यजतिजुहोतीनां को विशेषः ॥ १ । २ । ५ ॥**

यजतीनां यागानां जुहोतीनां होमानां को भेद इति प्रश्नः ॥ ५ ॥

तत्र यजतीनां विशेषमाह—

( यागानां विवेचनम् )

**तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः ॥ १ । २ । ६ ॥**

तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतय उच्यन्ते, इति विशेषः । तिष्ठता होमो येषु ते तिष्ठद्धोमाः, वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः, तथा, याज्यावन्तः पुरोडाशवन्तश्च ये, ते यजतय उच्यन्ते ॥६॥

अथ जुहोतीनां विशेषमाह—

( होमानां विवेचनम् )

**उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः ॥ १ । २ । ७ ॥**

उपविष्टेन कर्त्रा होमो येषु ते उपविष्टहोमाः, स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः । ये उपविष्टहोमाः स्वाहाकारप्रदानाश्च ते जुहोतयः, इत्युच्यन्ते ॥ ७ ॥

पूर्वमग्न्यन्वाधानादीनां चाङ्गत्वं सप्रमाणकमुक्तम् । तानि चाङ्गानि ऋत्विजः कुर्वन्तीति वक्ष्यति । "शेषमितरे यथाख्यम्" इति कर्माणि पुरुषाणामिति च । तत्रेदं चिन्त्यते—दर्शपूर्णमासज्योतिष्टोमादिषु किं त्रयोऽपि वर्णा ब्राह्मणक्षत्रियवैश्या ऋत्विजो भवन्ति, उत ब्राह्मणा एवेति । किं तावत्प्राप्तम् ? त्रयोऽपि वर्णा ऋत्विजो भवेयुरिति । कुतः ? प्रभुत्वात् । सर्वेप्यध्ययनवन्तो विद्वांसश्चेत्यतः सर्वेपि कर्तुं शक्नुवन्ति । यजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति नियमः पुरुषार्थतया स्मर्यते, न क्रत्वर्थतया । तेन क्षत्रियवैश्यावार्त्विज्यं कुर्वन्तो नियमातिक्रमात्कामं प्रच्यवेयाताम्, न तावता क्रतोः काचिद्गुणहानिः । तस्मात्त्रयोऽपि वर्णा ऋत्विजो भवन्तीति पूर्वपक्षे सिद्धान्तमाह—

( ब्राह्मणानामेवार्त्विज्येऽधिकारः )

**ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः ॥ १ । २ । ८ ॥**

ब्राह्मणा एव ऋत्विजो भवेयुः, न क्षत्रियवैश्याः । कुतः ? इतरयोः क्षत्रियवैश्ययोर्भक्षप्रतिषेधात् । अग्निहोत्रशेषं प्रकृत्य श्रूयते—"ते होचुः, को न इद९ होष्यति" इति प्रकृत्य "तस्मात्तद्य एव कश्च पिबेत्तद्वै नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेत्" इति, किम्पुनरग्निहोत्रोच्छिष्टमिति ।

ननु स्थाल्यामपि यदवशिष्टं तदप्यग्निहोत्रोच्छिष्टमेव स्यात् । नेत्याह । अथ यत्स्थाल्यामिति । यत्स्थाल्यां परिशिष्टं तद्यथा परिग्रहः । अनग्नौ निर्वपेत् । तद्यथा कुटुम्बार्थं सर्वसाधारणं तादृशं तद्यत्स्थाल्यां परितोद्धपरिश्रितं चान्यं पूर्णं शकटस्योपरिस्थानं परिणत् । यथा ततो हविषो निर्वापेपि तद्गतं धान्यं न शेषः । किं तर्हि ? पुनरपि योगान्तरयोग्यमेव । एवमेव तद्यत्स्थाल्यां पय इत्यर्थः । तस्मात्तद्यः कश्चिदकर्मसम्बन्धोऽपि पिबेत् । तथापि त्वग्नावधिश्रितत्वादब्राह्मणो न पिबेत् । ब्राह्मस्त्वसम्बन्धोऽपि पिबेदिति । शाखान्तरे तयोः सान्नाय्यभक्षप्रतिषेधः श्रूयते । "न राजन्यो न वैश्यो वा सान्नाय्यं पिबेदसोमपीथी ह्येषः" इति । तथा दर्शपूर्णमासयोः शाखान्तरे चतुर्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते । "ब्राह्मणानामेवेदं हविः सोम्यानां सोमपानां नेहाब्राह्मणस्यास्ति" इति शेषभक्षणार्थं हि चतुर्धाकरणम् । शेषभक्षाश्चर्त्विजाम् । यदि च राजन्यवैश्ययोरप्यार्त्विज्यं स्यान्न ब्राह्मणानामेवेदं हविः स्यात् । राजन्यवैश्ययोरपि पक्षे स्यात् । तत्रेदमवधारणमसङ्गतं भवेत् ॥ ८ ॥

## दर्शनाच्च ॥ १ । २ । ९ ॥

श्रुतावप्ययमर्थो दृश्यते, यत्, ब्राह्मणा एवर्त्विजो भवन्ति, न क्षत्रियवैश्या इति । तथाहि—" द्वया वै देवा—देवा आहैव देवा अथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाꣳ शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणान् " इति " तस्मादृत्विग्भ्य एव दक्षिणा दद्यान्नानृत्विग्भ्यः " इति । ऋत्विग्भ्यो यद्दीयते परिक्रयार्थं तद्दक्षिणाशब्दाभिधेयम् । " दक्षिणाभिर्ब्राह्मणान् प्रीणाति " इत्यनेन दक्षिणानां ब्राह्मणसम्बन्धो दृश्यते । अतोऽपि ब्राह्मणा एवर्त्विजः ।

किञ्च, दर्शपूर्णमासिक्यां चान्वाहार्यदक्षिणायां ब्राह्मणा एव दृश्यन्ते । तदेवं " ते वै देवा अहुतादो यद्ब्राह्मणायान्वाहार्यमाहरति " इति । दक्षिणा चार्त्विग्भ्यो दीयते । तस्माद् ब्राह्मणा एवर्त्विजो न क्षत्रियवैश्या इति सिद्धान्तः।

ब्राह्मणा एवर्त्विज इति नियमः क्रत्वर्थः । यतोऽब्राह्मणस्यार्त्विज्ये क्रतुवैगुण्यापत्तेः । तथाहि रामायणे—

" क्षत्रियो याजको यस्य चाण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः " इति ।

तथा—" राजयाजकयाज्यस्य विनश्यति तथा हविः " इति चाब्रह्मणार्त्विज्ये हविर्विनाशः स्मृतः । तथा—" प्रतिग्रहोऽधिको विप्रो याजनाध्यापने तथा " इतिस्मृतिश्च । अत एवाग्न्यधिश्रितस्य भक्षणप्रतिषेधात् क्षत्रियवैश्ययोरिष्टौ यजमान भागस्यापि होम एव विहितो न भक्षणमिति ॥९॥

इदानीमिदं विचार्यते " चित्रया यजेत पशुकामः " " द्वादशाहमृद्धिकामा उपेयुः " " स्वर्गकामस्यर्तयेयः " इत्येवमादीनां फलयुक्तानां कर्मणामारम्भे किं कर्तुर्याथाकाम्यमुतावश्यं तेषां करणमिति । तत्र विधिबलादवश्यकरणे प्राप्त आह—

( फलयुक्तकर्मानुष्ठाने याथाकाम्यम् )

## फलयुक्तानामारम्भे याथाकामी फलार्थित्वात् ॥ १ । २ । १० ॥

फलयुक्तानां फलसम्बन्धवतामारम्भे कर्मकर्तुर्याथाकाम्यं भवेत् । इच्छया

प्रवृत्तिः स्यादित्यर्थः । कुतः ? फलार्थित्वात् । फलमर्थयते याचत इति फलार्थी। यतस्तस्य फलार्थिनः फलप्राप्त्यर्थं कर्म विधीयते, नान्यस्य । तेन यः फलं प्राप्तुं वाञ्छति स फलयुक्तानि कर्माणि तत्प्राप्त्यर्थं करोति नान्यः । काममनतिक्रम्य यथाकामम् । यथाकाममित्यस्य भावो याथाकामी याथाकाम्यमित्यर्थः । ब्राह्मणत्वा-द्यथाकामशब्दस्य "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इतिष्यञ्प्रत्ययः । यथा स्त्रियां स्वभावात्तलन्तं वर्तते, एवं ष्यञन्तमपि क्वचित्स्त्रियां वर्तते यथा चिती वैदग्धी यथाकामीति पदवृत्तौ । तेन क्वचित्तदन्तं स्त्रियां नपुंसके च वर्तते। यदा स्त्रियां तदा ष्यञः षित्त्वात् "षिद्गौरादिभ्यश्च" इति ङीष् । "यस्येति च" इत्यकारलोपः । "हलस्तद्धितस्य" इति यकारलोपः । यथा चित्यं चितीति, तथैव याथाकाम्यं याथाकामी समानार्थे रूपद्वयम् । तस्मात्फलयुक्तानां काम्यकर्मणामारम्भे कर्तुर्याथाकाम्यमिति सिद्धान्तः ॥ १० ॥

एवं सर्वकर्मस्विच्छयाऽनुष्ठानप्राप्तावाह—

( नियमादिषु न याथाकाम्यम् )

**न नियमनिमित्ताग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणपशुषु प्रवृत्तेः ॥ १ । २ । ११ ॥**

नियमः 'सत्यं वदेत्' इत्यादिकः, निमित्तं कर्मविनाशादि, अग्निहोत्रं सायं-प्रातर्होमः, दर्शपूर्णमासौ प्रकृतीष्टी, दाक्षायणेऽपि दर्शपूर्णमासविशेष एव, आग्रयणं न च यज्ञः, पशुर्निरूढः, एषु नियमादिषु पञ्चन्तेषु नियमेन पुरुषं प्रवर्तयति। अत एषां नियोगतोऽनुष्ठानं कर्तव्यम्, नेच्छया । नियमेषु तावत् "सत्यवादी स्यादधः शायीस्यात्" इत्येवमादिशास्त्रं नियमेन प्रवर्तयति । कथम् ? यदि नियमेषु याथाकाम्यं स्यात्तर्हि नियमशास्त्रमनर्थकं स्यात् । शास्त्रं विनापि याथाकाम्यस्य सिद्धत्वात् । सर्वोऽपि यदेच्छति तदा सत्यं वदति, अधः शेते च । न च वेदवाक्यस्यानर्थक्यमिष्यते । अतो नियम्यते । शास्त्रस्यार्थवत्त्वाय नियमेषु न याथाकाम्यम् । निमित्ते सति यन्नैमित्तिकं विधीयते तत्रापि न याथाकाम्यम्। तद्यथा—"सायंप्रातर्दोहातौ वैन्द्रं पञ्चशरावमोदनं निर्वपेत" "गेहदाहेऽग्नये क्षामवते पुरोडाशः" इत्यादि । यद्यत्र याथाकाम्यं स्यात्, तर्हि सायंप्रातर्दोहातौ, गेहदाहे इत्यादिनिमित्तश्रवणमनर्थकमेव स्यात् । निमित्तश्रवणं विनापि विश्वजिदादिवदैच्छिकानुष्ठानस्य सिद्धत्वात् । अतोऽत्रापि न याथाकाम्यम् ।

अग्निहोत्रेऽपि न याथाकाम्यम् । कुतः ? "यावज्जीवमग्निहोत्रं जुहुयात्" इति श्रुतेः । न चाग्निहोत्रफलसाधनत्वं श्रूयते "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति । ततश्च फलयुक्तत्वाद्याथाकाम्यं स्यात् । अत्र कस्मिंश्चिद्ब्राह्मणे काम्यं प्रयोगं विधाय "यावज्जीवमग्निहोत्रं जुहुयात्" इति पठ्यते । तत्रायं सन्देहः—यावज्जीवप्रयोगः काम्यप्रयोगश्च भिन्नः, उत एक एवायं प्रयोगः, स एव यावज्जीवकालपरिमित इति । तत्र यदि यावज्जीवकालः कर्मधर्मत्वेन विधीयते, ततः "सायंजुहोति" "प्रातर्जुहोति" इति वाक्यवशेन तत्कालसमानयनमग्निहोत्रं न शक्नोति तावन्तं कालं पूरयितुमित्यर्थाज्ज्योतिष्टोमवदभ्यस्तरूपमेकमेव प्रयोगं प्रतिवक्ष्यते । यदि पुनर्जीवनं निमित्तत्वेन व्यपदिश्य कर्म विधीयते, ततो यावत्कर्तृगामि, नियते निमित्ते विना कामसम्बन्धेन चोद्यमानप्रकरणे दोषप्रसक्तेरवश्यं पुरुषेण जीवता स्वार्थसिद्ध्यर्थमनर्थपरिहाराय च कर्तव्यमिति कर्तृधर्मो नियमोऽनेन वचनेन चोदितो भवति । तदा सायम्प्रातर्होमयोर्जीवनस्य च संहतानां निमित्तत्वात्प्रतिदिवसं निमित्ते पर्यवसितं कर्म निवृत्तावृत्तिवशात्पुनः पुनः क्रियत इति प्रयोगात्यत्वमिति । तत्र किं तावत्प्राप्तम् ? एकः प्रयोगोऽभ्यस्तरूपः कर्मधर्मो यावज्जीविकता । यावज्जीवशब्दो मरणावधिकः कालपरः । तत्कालसम्बन्धश्च प्रकृते काम्याग्निहोत्रपूर्वमप्राप्तत्वाद्विधीयते । तथासत्यस्य वाक्यस्य नित्यप्रयोगविधायकत्वाभावेन वाक्यान्तरविहितः काम्यप्रयोग एवाग्निहोत्रस्य पर्यवस्यति । स च काम्यप्रयोगोऽभ्यसितव्यः । सकृदनुष्ठानस्य "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यनेनैव सिद्धेर्यावज्जीवमिति कालविधिवैयर्थ्यप्रसङ्गात् । तस्मादयं काम्यस्य कर्मणोऽभ्याससिद्ध्ये कालरूपधर्मविधिर्यावज्जीवकालमभ्यस्येदिति । तथासति कर्माङ्गविधौ कथम्भावसम्बन्धात्प्रकरणानुग्रहो भवति । पुरुषार्थविधौ तु तदसम्बन्धात्प्रकरणबाधः स्यात् । कथम् ? तद्धि कथाभावात्मकं कर्मधर्ममपेक्षमाणं पुरुषधर्मे विधीयमानेत्यन्तं बाधितमेव भवति । एवंचैकप्रयोगे सति दीर्घसत्रसंस्तव उत्पन्नो भविष्यति । इतरथा पुनः प्रतिदिवससमाप्तेर्न किञ्चित्सत्रसारूप्यं भवेत् । तस्मात्कर्मधर्मोऽभ्यास इति पूर्वः पक्षः ।

सिद्धान्तस्तु—यावज्जीवशब्दो न कालस्य वाचकः । किन्तु कृत्स्नस्य जीवनस्य । न च जीवनं कर्मधर्मत्वेन विधातुं शक्यते, तस्य कर्तृधर्मत्वात् । तं च कर्मधर्मं निमित्तीकृत्याग्निहोत्रप्रयोगो विधीयते । इह हि यावत्कर्तृभावि जीवनं श्रुत्यैव प्रतिपादितम् । जुहोतीत्येतदपि स्वार्थविधायकमेव । भवत्पक्षे तु जीवनेन कालो लक्ष्यते । जुहोतिनायमभ्यासः । न च श्येनश्रुतेर्लाक्षणिकार्थो वर्णयितुं

युक्तः । तस्मात्कृत्स्ने जीवने प्रणधारणक्रियारूपे निमित्ते पुरुषस्य प्रत्यवायपरिहारायाग्निहोत्रप्रयोगो विधीयते । नचात्र कर्मभेदः, तद्धेतूनां शब्दान्तरादीनामभावात् । नचाभ्यासः । अविशेषपुनःश्रुतेरभावात् । अतः प्रयोगभेद एवायं पर्यवस्यति । जीवनस्य चात्र निमित्तत्वात्सातं च नैमित्तिकस्य त्यागायोगायोगान्नित्यत्वमप्यर्थसिद्धम् । नच जीवननैरन्तर्येण प्रयोगनैरन्तर्यापत्तिः । सायम्प्रातः कालविशिष्टस्यैव जीवननिमित्तत्वात् । न कालान्तरा यस्य । तस्मात्काम्यस्वर्गार्थप्रयोगादयं नित्यः प्रयोगो भिन्न इति सिद्धान्तः । ततश्चाग्निहोत्रेऽपि न याथाकाम्यमिति सिद्धम् । अपि तु विशेषः । काम्ये प्रयोगे कृते नित्यः कृत एव भवति यः सोऽप्यग्निहोत्रप्रयोग एव ।

तथाचोक्तं तन्त्ररत्ने—"अग्निहोत्रं जुहोति" इत्येवमुत्पन्नस्य कर्मणो विपतरिवर्तमानस्य निमित्ते च विधानान्न तावत्कर्मान्तरमिदम् । नापि प्रयोगभेदः।

अन्तर्गतात्काम्ये नित्यप्रयोगस्य काम्यनित्ययोस्तन्त्रेणानुष्ठानम् । श्रुतिकृत एवत्वस्ति भेदः । पृथक् पृथगग्निनिमित्ते फलेच श्रूयेते । अतस्तदुपाधिक एव भेदो न वास्तवः ।

तस्मान्नित्यकाम्ययोस्तन्त्रेणानुष्ठानं सिद्ध्यतीति दर्शपूर्णमासयोरपि न याथाकाम्यम् । "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इतिश्रवणात् । अत्राप्यग्निहोत्रवन्नित्यकाम्यम् । कुतः ? " यावज्जीवं दर्शपूर्णमासाभ्यां यजेत " इति श्रवणात् । अत्राप्यग्निहोत्रवन्नित्यकाम्यप्रयोगभेदो ज्ञातव्यः । तद्वदेवात्रापि वाक्यद्वयस्य श्रवणात् । " दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत " "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति । अत्रापि यावज्जीवकालं स्वर्गार्थं दर्शपूर्णमासाभ्यासः कार्य इति कर्मधर्मविधिः पूर्वपक्षे । सिद्धान्ते तु पौर्णमास्यमावास्याविशिष्टजीवने धर्मप्रणधारणक्रियारूपे निमित्ते दर्शपूर्णमासयागविधिरिति । तस्माद्दर्शपूर्णमासयोर्न याथाकाम्यम् ।

दाक्षायणयज्ञेऽपि[१] न याथाकाम्यम् । तस्य गुणमात्रविकृतदर्शपूर्णमासरूपत्वात् ।

ननु तर्हि पृथक् तस्य ग्रहणं न कार्यम्, दर्शपूर्णमासग्रहणेनैव सिद्धत्वात् ।

अत्रोच्यते—"प्रजा यस्य च यशस्कामस्य" इत्येवमादिफलसम्बन्धदर्श-

१ "दाक्षायणेन स्वर्गकामो यजेत" इतिश्रुतेः । अत्र द्वितीयाध्याये तृतीयपादे चतुर्थमधिकरणमुपनिबद्धं भगवतो जैमिनिना ।

नात्काम्यत्वाशङ्काव्युदासार्थं पृथग्दाक्षायणग्रहणमित्यदोषः । प्रजादिकं फलं च गुणात्, न तु दाक्षायणादिति वक्ष्यामः । अतो दाक्षायणेऽपि न याथाकाम्यम् ।

आग्रयणेऽपि न याथाकाम्यम् । "अनयोर्वा अयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथेममश्नामेति तस्माद्वा आग्रयणेष्ट्या यजते" इतिश्रवणात् । अत्र द्यावापृथिव्यो रसस्यान्नस्य देवेभ्यो होमानन्तरमशनं विधीयते । अशनं च नित्यमवश्यं कार्यम् । अन्यथा जीवनासम्भवात् । न चाहुत्वैतत्कर्तव्यं शक्यम् । "हुत्वा देवेभ्योऽथेममश्नामः" इत्युक्तत्वात् । तस्मादशनवदाग्रयणादिनित्यता । तेन न याथाकाम्यम् । किञ्च, अकृताग्रयणस्य नवान्नभोजने प्रायश्चित्तं विहितमस्ति "अनिष्ट्वाऽऽग्रयणेन नवस्याश्नीयाद्वैश्वानरं द्वादशकपालं निर्वपेत्" इति । तथाहापस्तम्बः—एतमेव निर्वपेद्योऽकृत्वाऽऽग्रयणं नवस्याश्नीयादानीतो वा एष देवानां य आहिताग्निरदन्त्यस्य देवा अन्नं यदकृत्वाऽऽग्रयणं नवस्याश्नीयाद्देवेभ्यो भागं प्रतिकृत्य मध्यादार्तिमार्च्छेत्" इति । तस्मादाग्रयणेऽपि न याथाकाम्यम् । यतस्तं प्रकृत्यैवं श्रूयते—"तं वै संवत्सरो नानीजानमतीदितिषड्ढुवशुवधायाजी" इति । तस्मात्पशावपि न याथाकाम्यम् ।

अतएवाह वसिष्ठः—"अवश्यं ब्राह्मणोऽग्नीनादधीत दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्च यजेत" इति ।

हारीतोऽपि—

"पाकयज्ञान्यजेन्नित्यं हविर्यज्ञांश्च नित्यशः ।
सोमांश्च विधिपूर्वेण य इच्छेद्धर्मसङ्ग्रहम् ॥" इति ।

गौतमेन दर्शिता अष्टकाः पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त* पाकसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिनिरूढपशुबन्धः सौत्रामणिश्चेति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसंस्थाः । पार्वणं पर्वणि क्रियमाणं स्थालीपाकलक्षणम् । श्राद्धं मासि मासि श्राद्धम् ।

---

* हुतः, प्रहुतः, आहुतः, शूलगवः, बलिहरणं प्रत्यवरोहणं, अष्टकाहोमः, इति सप्तसंस्था इत्याहबौधायनः । औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्तपाकसंस्थाः—इत्यापस्तम्बसूत्रव्याख्यातारः ।

मनुः—

अग्निहोत्रं च जुहुयादाद्यन्ते द्युनिशोः सदा ।
दर्शेन चार्द्धमासान्ते पूर्णमासेन चैव हि ॥
सस्यान्ते नवसस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः ।
पशुना त्वयनस्यादौ सोमान्ते सौमिकैर्मखैः ॥

आद्यन्ते द्युनिशोः सायम्प्रातरित्यर्थः । अध्वरैश्चातुर्मास्यैरिति ॥ ११ ॥

**सोमे चैके ॥ १ । २ । १२ ॥**

सोमयागे–अग्निष्टोमाख्ये न याथाकाम्यम् । कुतः ? "वसन्ते वसन्ते ज्योतिषा यजेत" इति श्रुतेः ।

नन्वग्निहोत्रदर्शपूर्णमासयोश्च यावज्जीवग्रहणात्कर्तृधर्मनिमित्तत्वं भवतु, सोमादिषु कथम् ?

उच्यते–अत्रापि वीप्सासंयुक्तं कालशास्त्रमेव निमित्तम् । "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिकम् । न तावदेतत्काम्यस्योपदिश्यते, तस्य हि यथेच्छमनुष्ठानस्योक्तत्वात् । नैवं वक्तुं युक्तम् । अथापि नित्यस्य सकृत्प्रयोगः स्यात्तदा वीप्सा व्यर्था स्यात् । न च वसन्त इयत्तावधारणे प्रमाणमस्ति । तस्माद्यावज्जीवं ये वसन्तास्तेष्विति विज्ञायते । सप्तम्यपि च भिन्ने जुहोतीतिवन्नियमार्थैव । अत एवंजातीयके सर्वत्र कर्तृधर्मनिमित्तत्वावधारणात्कालशास्त्रमेव प्रत्येतव्यम् । एवं सर्वत्र चातुर्मास्यादौ बोध्यम् ।

ननु "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति काम्यत्वमप्यस्य श्रूयते । सत्यम्, "वसन्ते ज्योतिषा यजेत" इति नित्यत्वमपि श्रूयत एव । अतः प्रयोगभेद एवायम् । अत्रापि अग्निहोत्रादिवज्ज्ञेयम् । एकः स्वर्गकामप्रयोगः, अपरस्तु नित्य इति । अत एव गवामयने कारणान्तरेण सोमानन्तरायः श्रुतावुच्यते "कथमेषाᳫँसोमोनन्तरितो भवतीति, सवनैरिति ब्रूयात्" इति । यदि सोमस्यावश्यकर्तव्यता न स्यात्तर्हि कारणान्तरायवचनं न स्यात् । अस्ति च । तस्मात्सोमेऽपि न याथाकाम्यम् । एके ग्रहणं तु पूजार्थम् । मतान्तरस्याभावात् ।

अत्राह वसिष्ठः–अलमग्न्याधेयाय नानाहिताग्निः स्यात् । अलं च सोमाय नासोमयाजीति । अलं समर्थः । सामर्थ्यं च याज्ञवल्क्येनोक्तम्–

"त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः"

मनुः—" यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥"

एतत्कालस्य सोमयागविषये । ऋणश्रुतेर्नित्यस्यावश्यकर्तव्यत्वादकरणे प्रायश्चित्तविधानाच्च ।

शङ्खोऽपि—" त्रैवर्षिकाधिकान्नस्तु (?) पिबेत्सोममनन्द्रितः ।
इष्टिं वैश्वानरीं कुर्यात्तथैवाल्पधनो द्विजः ॥"

याज्ञवल्क्यः—" प्राक्सौमिकीः क्रियाः कुर्याद्यस्य त्रैवार्षिकं भवेत् ।"

मनुः—" पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
नत्वल्पदक्षिणैर्यज्ञैर्यजन्ते ह कथञ्चन ॥
इन्द्रियाणि यशः स्वर्गमायुः कीर्तिः प्रजाः पशून् "
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् "

मत्स्यः— " अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तथर्त्विजः ।
याज्यं तु दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥" इति ।

अन्नपरिमाणमपि शङ्खेनोक्तम्—"सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ ।
चातुर्मास्येषु सर्वेषु शतं पर्वणि पर्वणि "

यत्तु, श्रुतौ दातव्यैव यज्ञे दक्षिणा भवत्यल्पिकापीति, तन्नित्याभिप्रायम् ।

अत एव बौधायनः—" यस्य नित्यानि लुप्तानि तथैवाजस्रिकानि च ।
विपथस्थो न हि स्वर्गं न गच्छत्यपितो हि सः ॥
तत्स्मात्कन्दः फलैर्मूलैर्मधुना पयसाऽपि वा ।
नित्यं नित्यानि कुर्वन्ति न च नित्यानि लोपयेत् ॥"
इति ।

तेनाल्पधनस्यापि आधानमेवाधिकारः । तथाच प्रजापतिः—
सर्वसंस्थाधिकारी स्यादाहिताग्निर्धने सति ।
आदध्याग्निर्धनोऽप्यग्निं न तु पापभयाद्द्विजः ॥

न पापभयादाहिताग्निः संस्थाधिकारी । किन्तु धने सत्येव । तासां काम्यत्वात् ।

कूर्मपुराणे— " नास्तिक्यादथवालस्याद्योऽग्निं नाधातुमिच्छति ।
यजते यो न यज्ञेन स याति नरकान्बहून् ॥

तस्मात्सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः ।
आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् ॥" इति ।

तथा च स्मृतौ पशुसोमादिना शक्याकरणसम्भवे प्रत्याम्नाय उपदिश्यते।

" क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे ।
इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ॥"

क्लृप्तानामारब्धानां पशुसोमानामनुष्ठानासम्भवे तस्मिन् निष्कृत्य तत्प्रत्याम्नायत्वेनाब्दपर्यये वर्षस्यान्ते वैश्वानरीमिष्टिं निर्वपेदवश्यं निर्वपेदित्यन्वयः।

तथा याज्ञवल्क्योऽपि " प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ।
एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः ॥" इति।

स्वस्वकाले तत्प्रत्याम्नायरूपां वैश्वानरीमिष्टिं कुर्यादित्यर्थः ॥१२॥

## चातुर्मास्येषु ऋतुमुखश्रुतेः ॥ १ । २ । १३ ॥

चातुर्मास्येषु च न याथाकाम्यम् । कुतः ? ऋतुमुखश्रुतेः । " ऋतुमुखे ऋतुमुखे चातुर्मास्यैर्यजेत" इति वीप्साश्रवणात् । ऋतोर्मुखं प्रथमदिनम्प्रतिपत्तत्रेत्यर्थः। अतएव वैश्वदेववरुणप्रघासादीनि चातुर्मास्यपर्वाणि पतिपद्येव क्रियन्ते। न पौर्णमास्यामित्यवसीयते । यतः प्रतिपदेवर्तुमुखं न पौर्णमासीति । तथाच श्रूयते--" एषाह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरा एषोत्तमा या पूर्वा " इति ॥१३॥

नित्यत्वे कारणान्तरमाह—

## नियतसहपाठात् ॥ १ । २ । १४ ॥

नियतैर्नित्यैरग्निहोत्रादिकर्मभिः सहपाठादपि चातुर्मास्यान्यपि तद्वदवश्यं कर्तव्यानीत्यवसीयते । तेषु न याथाकाम्यं प्रतीयते । तथाहि–" त एवान्यज्ञक्रतूँस्तेनिरेऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धꣳ सौम्यमध्वरम्" इति नित्यैः सहपाठेन तत्सदृशत्वमवगम्यत इत्येतदभिप्रायः ॥१४॥

## दर्शनाच्च ॥ १ । २ । १५ ॥

गवामयनेषूपायान्तरेण श्रुतौ चातुर्मास्यानामनन्तरादर्शनाच्च चातुर्मास्येषु

न याथाकाम्यमित्यवगम्यते । तथाहि—" कथमेषां चातुर्मास्यान्यन्तरितानि भवन्तीति पयस्ययेति ब्रूयात् " इति । यद्यवश्यमनुष्ठेयं तस्यैव लोपशङ्कायाः करणान्तरेणानुग्रह उपपद्यते नेच्छयानुष्ठेयस्य ।

अपरे तु " दर्शनाच्च " इत्यमुं हेतुमग्निहोत्रादिषु सर्वत्र योजयन्ति। यतः सर्वत्र श्रूयते । " कथमेषामग्निहोत्रमनन्तरितं भवतीति व्रतेनेति ब्रूयात् " इति " कथमेषां पौर्णमासीꣳ हविः " इत्यादि । " कथमेषाꣳ सोमोनन्तरितो भवति " इत्यन्तम् । यतः सर्वत्र करणान्तरेणानुग्रहो दृश्यते ॥१५॥

एवं सिद्धान्तितेऽन्तरा पूर्वपक्षमाह—

**नोत्सर्गात् ॥ १ । २ । १६ ॥**

चातुर्मास्येषु न याथाकाम्यमिति यदुक्तम् , तन्न; किन्तु तत्रापि याथाकाम्यमेव । न नित्यत्वम् । कुतः ? उत्सर्गयोगात् । यतश्चातुर्मास्यानामुत्सर्गयोगोऽस्ति । उत्सर्गेण योगः सम्बन्धयोगः अस्ति तु यजमानस्येति। यदि हि चातुर्मास्यानि नित्यानि भवेयुस्तदोत्सर्गयोगो न स्यात् । ×अस्ति च। अतोऽत्रापि याथाकाम्यमेव । न नित्यत्वमिति ॥१६॥

एवं पूर्वपक्षिते सिद्धान्तं दृढयति—

**स्यात् त्रिꣳशद्वत् ॥ १ । २ । १७ ॥**

चातुर्मास्यानां नित्यत्वेऽप्युत्सर्गयोगः स्यात् भवेत् । किंवत् ? त्रिंशद्वत् । यथा दर्शपूर्णमासयोस्त्रिंशद्वर्षानन्तरमुत्सर्गः श्रुतोऽस्ति, नित्यत्वं च। तयोरसन्दिग्धं विद्यत एव । तथाहि—" ये दर्शपूर्णमासाभ्यां यजन्ते " इति प्रकृत्यैतदुच्यते— " तस्मात्त्रिꣳशतमेव वर्षाणि यजेत " इति। एवमत्रापि वचनादुत्सर्गयोगोऽपि वैकल्पिको भविष्यति । नित्यत्वं च । तस्माच्चातुर्मास्यानामपि नित्यत्वम्। अत एष्वपि न याथाकाम्यमिति सिद्धम् ।

अथवा एवं योजना—उत्सर्गयोगे सत्यपि चातुर्मास्यानां नित्यत्वं स्यात्। अपि च यदवश्यं कर्तव्यं तन्नित्यमित्युच्यते ॥१७॥

अथेदं विचार्यते—द्विप्रकारं कर्म, नित्यं काम्यं च । तत्र नित्यं प्रकृत्येदं

× " इति नूत्सृजमानस्य " इति कर्कभाष्ये श्रुतिरुपन्यस्यते ।

विचार्यते, किं सर्वाङ्गोपेतं कर्तव्यम्, उत यावन्त्यङ्गानि कर्तुं शक्नोति तावद्भिरङ्गैरुपेतमिति । किं तावत्प्राप्तम् ? सर्वाङ्गोपेतमेव कर्तव्यमिति । कुतः ? भावनांशस्य सर्वैरङ्गैः परिपूरणेन सर्वाङ्गोपेतस्यैव प्रधानस्य फलत्वात्; अन्यथाऽङ्गाम्नानस्यैव वैयर्थ्यापत्तेः । तस्मात्सर्वाङ्गोपेतमेव कर्तव्यमित्येवं प्राप्त आह––

( नित्यं कर्म यथाशक्ति सगुणं कर्तव्यम् )

## विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् ॥ १ । २ । १८ ॥

नित्ये कर्मणि, अग्निहोत्रदर्शपूर्णमासादिके विगुणेऽपि अङ्गहीनेऽपि कृते फलनिर्वृत्तिः शब्दात् । यथा–दर्शपूर्णमासयोस्त्रिंशद्वर्षानन्तरमुत्सर्गयोगे सत्यपि नित्यत्वमविप्रतिपन्नं विद्यते । एवमिहापीति निर्वृतिः प्रत्यवायपरिहाररूपफलस्य निष्पत्त्यर्थः । अङ्गप्रधानभेदात् । यतोऽङ्गानि प्रधानानि च भिन्नानि । नित्येषु चेति कर्तव्यतैव नास्ति, कुतस्तत्साकल्यम् । कुतः ? इतिकर्तव्यता नास्ति, अपूर्वाभावात् । अपूर्वमहिता हीतिकर्तव्यता, सा च तस्मिन्नसति भवितुमर्हति । कथमपूर्वभावः फलाभावात् । कालान्तरभाविफलाप्त्यर्थं ह्यपूर्वं कल्प्यम् । तच्चासति फले कल्पयितुं न शक्यते । तस्मान्नित्येषु यागस्यैव भाव्यत्वेन फलस्य सम्बन्धः । तस्मात्पौर्णमास्याममावास्यायां चाग्निमुद्दिश्य पुरोडाशस्त्यक्तव्य इत्येतावदुपदिश्यते । तेनादृष्टार्थानि यान्यङ्गानि सन्निपत्योपकारकाणि यैर्विना प्रधानभूतयागनिष्पत्तिर्न भवति, अन्यथानुपदिश्येत, अतश्च तावद्भिरुपेतं प्रधानं कर्तव्यम् । नाङ्गानि । अङ्गाम्नानं तु काम्यप्रयोगार्थम् । अतोऽग्निकालपुरोडाशमात्रमादरणीयम् । अन्यदङ्गजातमदृष्टार्थं नादरणीयमिति ।

कथं तर्हि, निष्फले पुरुषस्य प्रवृत्तिरिति चेत्; उच्यते––प्रत्यवायानुत्पत्यर्था प्रवृत्तिर्न तु फलार्था । विहिताकरणाद्धि प्रत्यवायः स्मर्यते " अकुर्वन् विहितं कर्म प्रायश्चित्तीयते नरः " इति । अतो नित्यकर्मणो निष्फलत्वादपूर्वाभावादितिकर्तव्या नास्तीति हीनाङ्गस्यैव प्रयोग इति केचिदिति सिद्धान्तः ।

तदेतन्नोपपद्यते । कथम् ? भावनातो हि तिस्र आकाङ्क्षा जायन्ते, केन, किम्, कथमिति । तत्र कथमितीतिकर्तव्यताकाङ्क्षा नित्येऽप्यस्ति । तस्मादत्राप्यस्तीतिकर्तव्यता । सत्यम्, अस्त्येवेहाप्याकाङ्क्षात्रयम् । तथापि किमाकाङ्क्षायाः समानपदोपात्तेन यागेनैव पूरणात्तन्निवृत्त्युपयोगिन्येवेतिकर्तव्यता कथ-

माकाङ्क्षया गृह्यते । न त्वदृष्टप्रयोगिप्रयाजाद्यङ्गभदृष्टस्य साध्यस्याभावादिति चेत्, नः यागस्य स्वतोऽपुरुषार्थत्वेनान्यथानुपपत्त्या समानपदोपात्तं यागमुत्सृज्य सर्वेषामभिमतस्य प्रत्यवायपरिहारस्येह भाव्यतया कल्पनात् ।

ननु चेत्सर्वेषामभिमतः स्वर्गः किमिति न कल्प्यते । तस्य शरीरारम्भहेतुतया मोक्षविरोधित्वेन मुमुक्षूणामनभिप्रेतत्वात् । प्रत्यवायपरिहारस्तु तैरपीष्यत एव । कथम् ? तस्मिन्याग एतज्जन्मोपार्जिते भवान्तरोपार्जिते वावस्थिते सति तदुपभोगहेतुभूतशरीरारम्भावश्यम्भावेन मोक्षाभावात् । अमोक्षार्थिनाप्यवश्यं पापक्षय एषितव्य एव समीहितफलाय । इतरथाऽप्रक्षीणे पापे फलाप्राप्तेः । तस्मान्नित्यानि कर्माणि पापक्षयोपायत्वेन चोद्यमानानीतिकर्तव्यतामपेक्षन्त एव । धर्मशास्त्रेषु च तथैवाकरणे प्रत्यवायः स्मृतस्तथैव करणादपि पापक्षयः स्मर्यते "पूर्वां सन्ध्यां जपँस्तिष्ठेन्नैशमेनो व्यपोहति" इत्यादिभिः । "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्" इति च । तस्मान्नित्येऽपि अस्त्येव प्रत्यवायपरिहाररूपं फलम् । तस्मान्नित्यान्यपि कर्माणि सर्वाभिमतस्य तस्य पापक्षयस्योपायत्वेन बोध्यमानानीतिकर्तव्यतामपेक्षन्त एव । ततश्च न सर्वाङ्गोपेतामनुष्ठानं कश्चिदपि सर्वदा कर्तुं शक्नोति । जीवनादिनिमित्ते च तानि विधियन्ते । निमित्तस्य चैतदेव रूपं तस्मिन्सति नैमित्तिकमवश्यमेव कर्तव्यम् । तेन यावज्जीवं कर्तव्यं, सर्वाङ्गोपेतं च कर्तव्यमिति दुःशकमेव । तेन यथाशक्नुयादित्युपनिबध्यते । तत्रावश्यमन्यतरस्मिन् हातव्ये निमित्ते सति नैमित्तिकस्य कर्तव्यं प्रधानवाक्ये श्रूयते । तद्यदि कस्यचिदङ्गस्यानुरोधेन, सति निमित्ते नैमित्तिकं न क्रियते । ततः प्रधानवाक्यविरोधः स्यात् । प्रधानमात्रश्रुत्या निमित्ते विधीयते, अङ्गानि तु तदर्थतया प्रकरणेन गृह्यन्ते, अतस्तानि प्रधानवाक्यगतावश्यकत्वानुरोधेन यथाशक्त्युपसंहर्तव्यानि ।

नन्वेवं हीनाङ्गादपि प्रधानात्फलसिद्धेरभ्युपगमात्समर्थोऽप्यङ्गानि परित्यक्ष्यतीति । मैवम् । शक्तस्य कामतोऽङ्गे त्यज्यमाने वैगुण्यं स्यादेव । अङ्गोपदेशं निमित्तं वा वाक्यानुरोधेन यावन्त्यङ्गानि कर्तुं शक्नोति तावद्भिरुपेतं प्रधानमेनः क्षापयतीति शास्त्रार्थोऽवधार्यते । तावतैव शास्त्रवशात्फलनिष्पत्तिरिति साधूक्तं "विगुणे फलनिवृत्तिरङ्गप्रधानभेदात्" इति । एतद्धि प्रयोगविध्यनुष्ठानेष्वङ्गेषूच्यते । यद्धि कुर्यादित्युच्यते, तद्यथाशक्त्युपबध्यते । यानि तु स्वभावसिद्धानि विध्यन्तरनिबद्धानि वोपजीव्यन्ते, यथा लोके धनार्जनादि, वेदेऽपि कालो विद्या-

ऽग्नयश्च, तेषां स्वरूपेणवाधिकारिविशेषणत्वममावास्यासम्बन्धी द्रव्यवान्विद्यावानग्निमानिति। एतदुक्तं भवति। अङ्गं हि विधिबलादुपादीयते, निमित्तानुरोधात्त्यज्यते। उभयथानुग्रहार्थं शक्तं प्रत्युपादीयते, अशक्तं प्रात त्यज्यत इति नान्यागतिरस्ति। तत्रोभयानुग्रहो युक्तो यदि सम्भवति, सम्भवश्चोपादेयेष्वङ्गेषु, यथाशक्ति व्रीहीन्सम्पादयेत्, यथाशक्त्यवहन्यात्, इति। आहवनीयादिस्वरूपं तु नानेन विधिनोपादीयते। तस्मादग्निमान्विद्यावान्द्रव्यवाञ्जीवँश्च यजेतेत्येवमाश्रियते। अतो विद्याग्निकालादिपरित्यागेनान्येषामङ्गानां यथाशक्त्यनुष्ठानं सिद्धम्। तथा चोक्तं तन्त्ररत्ने—तानि प्रयोगविधिना कर्तुरुपादेयत्वेनाङ्गानि चोद्यन्ते तेषामेव शक्तिपरिमितत्वम्। यावन्ति शक्नुयात्तावन्ति कुर्यादिति, यानि तु विध्यन्तरप्रयुक्तानि स्वयं सिद्धानि चाङ्गत्वेन गृह्यन्ते तानि। स्वरूपत एवाधिकारिविशेषणम्। यथाग्न्यादीनि। तेषामुपादानस्य प्रयोगविधिनानुपादानान्न यावच्छक्तीत्युपबन्धसम्भवः। किन्तु तदपेक्षो विधिस्तद्वन्तमेवाधिकरोति। तेन सपत्नीकस्यार्षेयस्य ख्यातोपात्तसङ्ख्याविशिष्टस्याग्निमतो विद्यावतः प्रदोषादिकालसंयोगिनोऽधिकारो नान्यस्येति। एवं च प्रतिसमाधेयाङ्गवैकल्येऽप्यग्न्यादिमानधिक्रियेतैव। आधानं तु न कुर्यात्तस्यानैमित्तिकत्वादिति ॥१८॥

## प्रायश्चित्तविधानाच्च ॥ १ । २ । १९ ॥

प्रायश्चित्तविधानादप्येवं ज्ञायते, तद्विगुणेऽपि फलनिर्वृत्तिर्भवति, यदि च विगुणात्फलं भवतीति। येषां मते नित्येषु फलाभावेनापूर्वाभावादर्थ इतिकर्तव्यता नास्ति, तेषां प्रायश्चित्तम्, अन्यत्रानुपपन्नम्। सेतिकर्तव्यताके तु निमित्तभेदेन जाते वैगुण्ये तत्परिहारायापरं होमाख्यमङ्गं "भिन्ने जुहोति" इत्यादिकमुत्पन्नं सत् क्रियत एव। पक्षान्तरे त्वस्यामितिकर्तव्यतायां भेदेन जातेऽपि नास्ति वैगुण्यम्। गुणहानिर्हि वैगुण्यम्। असति गुणे कस्य हानिः स्यात्। ततश्चास्मिन्पक्ष एव प्रायश्चित्तविधानमुपपन्नमिति ॥ १९ ॥

## तथा च दृष्टम् ॥ १ । २ । २० ॥

नित्यं कर्म यथाकथञ्चिच्छ्रुताङ्गपरित्यागेनापि यथाशक्तिअङ्गोपेतमनुष्ठातव्यत्वेन श्रुतौ दृष्टम्। तथाहि—"यत्पयो न स्यात्केन जुहुया इति, व्रीहियवाभ्यामिति" इत्यादि, "न वा इह तर्हि किञ्चनासीदथैतदहूयतैव सत्यंश्रद्धायाम्"

इत्यन्तेन ग्रन्थेन । तथा "तदेव यादृक् कीदृक् क होतव्यम्" इति शाखान्तराच्च । तस्माद्विगुणेऽपि नित्ये प्रत्यवायपरिहाररूपं फलं भवत्येव । अत एवोक्तं कर्काचार्येण—उपात्तदुरितक्षयो वोत्पत्स्यमानदुरितप्रतिबन्धो वा भवत्येव ॥ २० ॥

अथ काम्ये कर्मणि चिन्त्यते—काम्ये विगुणे फलानिष्पत्तिर्भवत्येव, यतस्तत्राप्यङ्गानि प्रधानानि च भिन्नानि । अश्वमेधे च काम्ये प्रायश्चित्तविधानमप्यस्त्यश्वं प्रकृत्य "अथातः प्रायश्चित्तीनां यद्यश्वो व उ वाऽऽस्कन्देद्वायव्यं पयोनुनिर्वपेदथ यदि स्रामो[1] विन्देत्" इत्यादि । तथा पञ्चशारदीय उत्सृष्टान्पशून् प्रकृत्य ताण्ड्ये प्रायश्चित्तविधानं दृश्यते "अपो नप्त्रियोऽप्सु मृतः" इत्यादिकम् । यदि च विगुणादपि काम्यात्फलं न स्यात्प्रायश्चित्तविधानं व्यर्थमेव स्यात् । तथाच दृष्टम्, विगुणमपि काम्यं फलोत्पादकं वेदे दृष्टम् । कारीरीमिष्टिं प्रकृत्य श्रूयते "यदि वर्षेत्तावत्येव जुहुयात्" इति । अत्र समाप्तायामेव कारीर्यां तत्फलं वृष्टिरूपं वेदे दृष्टम् । अतो विगुणेऽपि काम्ये फलं सिद्ध्यतीति पूर्वपक्षिते सिद्धान्तमाह—

( काम्यं कर्म सगुणमेवानुष्ठेम् )

### न श्रुतिलक्षणत्वात् ॥ १ । २ । २१ ॥

यदुक्तं विगुणेऽपि काम्ये फलं सिद्धतीति, तन्न; कुतः श्रुतिलक्षणा काम्यस्य । यतः काम्यं सगुणमेव सर्वाङ्गोपतमेव श्रुत्या लक्षितं साधनत्वेन विहितम् । तत्रालोपे काम्यमानफलोत्पत्तेः । तत्र प्रधानस्य त्यागे यथाश्रुतं फलं नास्ति । एवमङ्गत्यागेऽपि । फलसाधनत्वं हि शास्त्रैकसमधिगम्यम् । ततो यदङ्गं प्रधानं वा यावच्छब्दोपात्तम् । तस्य लोपे साधनत्वं नास्ति । अता यदा सर्वाङ्गोपेतं सम्पादयितुं शक्नोति, तदैव प्रवर्तते, नतु यथाशक्ति । न हि तत्राङ्गत्यागे प्रमाणमस्ति । प्रधानवाक्यसन्त्यागेप्यविरोधात् । न हि तस्यावश्यकत्वं केनचिदुक्तम् । यतस्तदावश्यकत्वं न लभ्यते । कामश्रुतिस्तु समर्थेऽपि वर्तमाना श्रुत्यर्थतां न जहातीति नाङ्गत्यागे प्रभवति । निमित्तश्रुतिस्तु निमित्ते सत्यक्रियमाणेऽपीत्येतदतिवैषम्यम् । अतो निमित्ते सति नित्यस्यावश्यकर्तव्यत्वबलात्सर्वदा सर्वाङ्गोपेतस्य केनापि कर्तुमशक्यत्वाद्यथाशक्त्यनुयात्तथाकुर्यादित्येवं कल्प्यते ।

---

१ स्रामो नासारोगः ।

काम्यं त्ववश्यकर्तव्यत्वाभावादेवं कल्पयितुं न शक्यते । अतः काम्यं विगुणं फलं न साधयतीत्येवं सिद्धम् ॥ २१ ॥

ननु यद्येवं तर्हि काम्य एवाश्वमेधपञ्चशारदीयादौ किमर्थं प्रायश्चित्तविधानमित्याशङ्कायामाह—

**प्रायश्चित्तं तत्कालम् ॥ १ । २ । २२ ॥**

आरब्धं हि काम्यम्, अयथाकरणादिना विगुणमपि समापनीयमेव। असमापने शिष्टविगर्हणरूपाच्छिष्टाचारात्स्मृतिं, स्मृतेश्च श्रुतिं परिकल्प्यावश्यं समापनीयमेव । विगुणाच्च यद्यपि श्रुतं फलं न भवति, तथापि तादृशात्प्रत्यवायपरिहारो भवत्येव । अत एव तत्कालं तस्य काम्यस्य कर्मणो विनाशकाले यथा प्रायश्चित्तं तत्तस्य विनष्टस्य कर्मणः प्रत्यवायपरिहारजनने उपकारकत्वात्स्वार्थमेव भवति ॥ २२ ॥

न हि भवति प्रायश्चित्तविधानमर्थवत् । विगुणायामपि कारीर्यां वृष्टिरूपफलदर्शनस्य का गतिरित्याकाङ्क्षायामाह—

**दृष्टे तत्परिमाणम् ॥ १ । २ । २३ ॥**

कृतार्धायामिष्टौ, वर्षणे दृष्टे सति तत्परिमाणकर्म कर्तव्यम्, तत्परिमाणमदृष्ट वर्षणे क्रियते । ननु वृष्टौ दृष्टायां किमप्यूनं, कृतार्धं वा परित्याज्यमिति । न च वर्षणं तस्या इष्टेः फलम्। किन्तु कालस्वभावाप्रतिवन्धकापगमाच्च। काम्यस्य कर्मणो वातायां फलेच्छायामवाप्ते वा फलेऽवश्यसमापनीयत्वं च जैमिनिनोक्तं षष्ठाध्यायस्य द्वितीये चरणे "प्रक्रमात्तु नियमेतारम्भस्य क्रियानिमित्तत्वात्" (६–२–१३) इति ।

अथवा, एवं व्याख्या—वर्षणे दृष्टे सति तत्परिमाणमेव कर्तव्यं यावत्परिमाणे कृते वृष्टिर्दृष्टा तावत्परिमाणमेव कार्यं न समापनीयमित्यर्थः । "यदि वर्षेत्तावत्येव जुहुयात्" इति वचनात् । तथाचोक्तं कर्काचार्यैः "तावत्प्रमाणता कर्मण उच्यते" इति ॥ २३ ॥

॥ इति द्वितीया कण्डिका ॥

वाक्यप्रकरणाभ्यामङ्गविनियोग उक्तः । अधुना लिङ्गेन मन्त्राणां विनियोगं वक्तुकामोऽप्येतत्प्रसिद्धाँस्तान्मन्त्रानाह—

( *मन्त्रलक्षणम् )

**ऋचो यजूꣳषि सामानि निगदा मन्त्राः ॥ १।३।१ ॥**

ऋगादयो निगदान्ताश्चत्वारो मन्त्राः+ । तत्रार्थवशेन वृत्तवशेन वा यत्र पादव्यवस्था सा ऋक् । तत्र " समिधाग्निं दुवस्यत " ( ३–१ ) इत्यादौ यत्र प्रत्यक्षेण समाप्तोऽर्थो दृश्यते, तत्रार्थवशेन पादव्यवस्था, यत्र च क्रियापदानुपादानात् " सुसमिद्धाय शोचिषे " [३–२] " तं त्वा समिद्भिरङ्गिरः " (३–३) इत्यादौ अपर्यवसितोऽर्थस्तत्र वृत्तवशेन पादव्यवस्था भवति । अतश्च यत्र नियताक्षराणि, नियताश्च पादाः, नियतानि चावसानानि, सा ऋगित्युच्यते ।

अनियताक्षरपादावसानं यजुः ।

यद्यपि प्रगीतं मन्त्रवाक्यं सामेत्यभियुक्तप्रयोगः, तथापि तत्र विशेषणं गीतिः, विशेष्यायृगक्षराणि, ' नागृहीतविशेषणा विशेष्ये बुद्धिः ' इति प्रथमप्रतीयमानत्वाद्गीतिरेव सामेत्युच्यते । तथाच " कवतीषु रथन्तरं गायति " " यद्योन्यां तदुत्तरयोर्गायति " ऋच्यध्यूढं साम गायति " प्रजापतेर्हृदयमनृचं गायति " इत्याद्युपपन्नं भवति । अत ऋगक्षरातिरिक्तं यद्गीतिशब्दवाच्यं तत्सामशब्देनोच्यते ।

ननु यदि रथन्तरादिशब्दा गीतेरेव वाचकास्तदा " रथन्तरेण स्तुवीत " इति कथं स्तुतिसाधनत्वम् । गुणगुणिसम्बन्धकीर्तनं हि स्तुतिः, सा च गीतिरूपेण साम्ना न सम्भवति ।

उच्यते, गीतेः स्वयं स्तुतिवाचकत्वाभावादृगक्षरप्रकटनद्वारा स्तुतिसाधनत्वं भवतीति नोक्तदोषः ।

---

* ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः । + ऋग्यजुःसामान्यतमत्वं मन्त्रत्वम् । कर्मणि यागजपादौ यः साधनभूतः शब्दः स मन्त्रः । कर्मकरणः शब्दो मन्त्र इत्युक्तं भवतीति श्रीवल्लभाचार्यचरणा भावार्थपादभाष्ये प्राहुः । नच ईशावास्यादिषूपासनसाधनत्वमिति पुरुषोत्तममहाराजोक्तमव्याप्तमिति वाच्यम् । ईशावास्यमित्यादिशब्दानामीशोपासनसाधनत्वाव्यभिचारात् । एतेन वाचःस्तोमादिपर्यन्तमभिधावनमप्रयोजकमिति बोध्यम् ।

निगदाः प्रैषाः । परसम्बोधनार्थाः प्रोक्षणीरासादयाग्नीद् "अग्नीन् विहर" इत्येवमादयः ॥ १ ॥

ननु निगदा अपि यजूंष्येव ततः किमर्थं पृथगुक्ताः ?

उच्यते, 'उपांशु यजुषा' 'उच्चैर्निगदेन' इति धर्मभेदेन यजुःष्वन्तर्भावशङ्क्या पृथग्वचनम् । वस्तुतस्तु निगदानां यजुष्ट्वमेव । परसम्बोधनार्थत्वात्तु 'उच्चैर्निगदेन' इति धर्मभेदः । न च धर्मभेदाद्भेदः, ऋक्सामयोरपि क्वचिदुपांशुप्रयोगविधानात् । अतस्त्रैविध्यमेव मन्त्राणाम् । तथाचोक्तम्—"अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयीविदा विदुः । ऋचः सामानि यजूंषि" इति । त्रीन् वेदान् विन्दन्तीति त्रिविदः, त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः, ते च यं मन्त्रभागमृगादिरूपेण त्रिविधमाहुस्तं गोपायेति योजना । ऋग्यजुःसामात्मको मन्त्रभेदोऽभिहितः । तदवान्तरभेदाकाङ्क्षायामृचां च साम्नां चाध्येतृप्रसिद्ध्यैव भेदे सिद्धे लक्षणं न क्रियते । यजुषां तु प्रश्लिष्टपठितत्वाल्लक्षणं विना भेदो न ज्ञायत इत्यत आह—

( यजुषां लक्षणम् )

## तेषां वाक्यं निराकाङ्क्षम् ॥१।३।२॥

तेषामिति तच्छब्देन यजुषां निर्देशः, ऋचां साम्नां च भेदे लक्षणापेक्षाभावात् ।

ननु यजुषामपि भिन्नप्रतीकविनियोगाद् भेदः सेत्स्यति । सत्यम् । न तावत्सर्वेषां ब्राह्मणेन विनियोगोऽस्ति । न च "परादिना पूर्वान्तः" (१। ३। ९) इत्येतल्लक्षणं वेदवचनं न्यायेन तु सूत्रकृतेदमुक्तमिति, अतो लक्षणमुच्यते । तेषां यजुषां प्रश्लिष्टपठितानां मध्ये यावत्पदवृन्दं निराकाङ्क्षं पूर्वापरपठितपदान्तराकाङ्क्षारहितं तावत्पदसमूहात्मकमेकं वाक्यम्, ईदृशमेकं यजुः, अर्थादतोऽन्यद्वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति । सर्वमन्त्राणामनेन यजेतानेन यजेतेति प्रथमं प्रकरणाम्नानानुमितवाक्यविनियोगो भवति, ततः साक्षाद्यागसम्बन्धासम्भवात्तदुपकारिप्रकाशनं तैरिष्टं भवतीत्येवं कल्प्यते, तेन यावता पदसमूहेन पादसाधनं स्मर्यते तावद्यजुर्वाक्यम् । वचनार्हं हि वाक्यम् । कार्यसमर्थं च तदर्हं भवति न न्यूनमधिकं वा । तच्चैकार्थं साकाङ्क्षावयवं च । तद्यथा—"देवस्य त्वा सवितुः प्रसवे" इति । अत्र हि सर्वाणि पदानि ग्रहणप्रकाशनार्थानि, अत एकार्थानि,

साकाङ्क्षाणि च, तस्मादेषामेव यजुष्ट्वम् । एवं सर्वत्र पुरस्तात्परस्ताच्चैकार्थपदपरिग्रहेणासमर्थपदविमोकेन भिन्नानि यजूंषि कल्प्यन्ते । एकप्रयोजनं साकाङ्क्षं पदजातमेकं यजुरित्युक्तम् । अनेन लक्षणेन यत्र समवेतार्थप्रकाशकं गृह्णामीत्यादिकं पदमस्ति तत्रैतत्सुगमं परिमाणम् । अथ यत्र समवेतार्थपदाभावाल्लैङ्गिकविनियोगाभावे वाचनिक एक विनियोगः परस्परनैराकाङ्क्ष्यं च स्वरूपतोऽवगम्यते । यथा " इषे त्वोर्जे त्वा " ( १–१ ) इति यथा च " आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां (९–२१, १८–२९) इति । तत्र किं यदेकं यजुरिति चिन्त्यते । किं प्राग्दृष्टार्थमन्त्रावधेरेकमन्त्रत्वम् , उत यावदेव मिथः सम्बन्धः " इषे त्वा " इति तावदेकं यजुः, अन्यत्तु यजुरन्तरमिति, तदर्थं किं सर्वमेकार्थमुत भिन्नार्थमिति विचारः । तत्र तावदनुष्ठेयार्थप्रकाशनादेषामदृष्टार्थत्वम् । अदृष्टं चात्र कल्प्यमानमेकमेव कल्प्यम् , बह्वदृष्टकल्पनाया निष्प्रामाणिकत्वाच्च, अतः सर्वेषामेकार्थत्वात्प्रत्येकं साधनशक्त्यभावात्संहत्यकारित्वात् विभज्यमानानां साकाङ्क्षत्वमस्तीत्येकवाक्यता । कथं पुनरेकत्वपक्षे प्रतीकभेदेन विनियोगः, इषे त्वेति शाखां छिनत्ति ' ' ऊर्जे त्वेत्यनुमार्ष्टि ' इति, कथं च ' कॢप्तीर्वाचयति ' इति बहुत्वनिर्देशः ?

उच्यते, आदिमध्यावसानग्रहणेनैकोऽपि मन्त्रस्तत्र तत्र विनियुज्यमानो न पीड्येत यावद्विनियोगं सकल आवर्तिष्येत, खण्डस्याप्रयोजनत्वात् । कल्पतां कल्पतामिति च पुनः पुनः प्रयोगादेकवाक्यत्वेऽपि बहुवचनाविरोधः । तस्मादेतेषामेकार्थत्वमेकमन्त्रत्वं चेति प्राप्त आह—

( मन्त्रेष्वध्याहारोऽनुषङ्गो वा कार्यः )

## मिथः सम्बद्धम् ॥ १।२।३ ॥

यावदेव मिथः सम्बद्धं परस्परसम्बद्धमन्वययुक्तम् ' इषेत्वा ' इत्येतावत् तावदेकं यजुः, एकं वाक्यम् , ततोऽन्यद् वाक्यान्तरं यजुरन्तरमिति । यद्यपि एषां समवेतार्थप्रकाशकपदार्थत्वाददृष्टार्थत्वम् , तथापि न तस्यादृष्टस्यैकत्वम् , यतो विनियोगप्रयोजने रूपादुत्तरकाले । नहि विनियोगप्रयोजनोत्तरकालं रूपनिरूपणं युक्तम्, अज्ञातरूपस्य विनियोगाशक्तेः, अविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः । रूपं तु निरपेक्षं पाठादवधार्यते । तत्कालावधृतभेदानुवर्तित्वं च प्रयोजनविनियोगयोः । प्रमाणवशाच्च बहून्यदृष्टानि कल्प्यन्ते, तदुक्तम् , प्रमाणव-

न्त्यदृष्टानि कल्प्यानि सुबहून्यपीति । न च रूपोपलब्धिवेलायां परस्परसाकाङ्क्ष-त्वमेकप्रयोजनत्वं चोपलभ्यते। ततश्च निरोधे भेदे निर्धारिते पश्चादेकत्वोपादा-नकारणं किमपि न सम्भवति । न च प्रागनुपलब्धं साकाङ्क्षत्वं पश्चात्कल्पयितुं शक्यते । न चैतेषामदृष्टार्थत्वं च ब्राह्मणोपदिष्टदृष्टार्थसाधनत्वात् । तथाहि— ‘ इषेत्वा ’ इति मन्त्रः शाखाच्छेदने करणत्वेन ब्राह्मण उपदिष्टः । क्रियानिष्पा-दकं च करणम् । न च मन्त्राणां क्रियानिष्पादकत्वं तत्प्रकाशनादन्यत्किमपि सम्भवति, तेन विधिबलादेषां प्रकाशनार्थत्वम् , ततश्च तद्बलेनैव चैतेषां यावता विना विहितप्रकाशनसामर्थ्यं नास्ति तावदनाम्नातमपि अध्याहर्तव्यम् ’ इत्यादि ।

यद्वा यथैव “ रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति ” इति वचनादवा-चकस्यापि विनियोगानुसन्धानेन स्तोत्राभिमुख्यचिह्नत्वं भवति, एवं ‘ इषेत्वा ’ इत्यादिना छेदनादिस्मरणहेतुत्वम् । उभयमपि चैतत्प्रमाणविदिति सूत्रकारैः कैश्चित्कथञ्चिदुदाहृतम् । सर्वथात्रैवमध्यवसातव्यम्—विकलवाक्यप्रयोगासम्भवा-दवाचकप्रयोगानुपपत्तेश्चाध्याहारः । यथाम्नातविनियोगानुसारात्तादृशेनैव स्मर्तुः संस्काराधीनेन भवितव्यम्, तत्रानुष्ठातृअभिप्रायाधीनोऽन्यतरपरिग्रह इति तन्त्र-टीकायाम् तत्रैकेन छेदनं प्रकाश्यते अन्येनानुमार्जनमिति दृष्टप्रयोजनभेदादपि सिद्धो वाक्यभेदः । तथा “ आयुर्यज्ञेन कल्पताम् ” इत्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् “ कॢप्तीर्वाचयति ” इति बहुवचनस्य चोदितत्वात्तत्सम्पत्त्यर्थ-मायुरादिविशिष्टकॢप्तिभेदप्रकाशनपरत्वादर्थभेदेन मन्त्रभेदः ।

तदेवं साकाङ्क्षस्य यजुषो विहितार्थप्रकाशकत्वनिर्वाहयोग्यपदाध्याहार उक्तेऽपि यत्र सन्निहितवाक्ये मन्त्रशेषोदृश्यते, साकाङ्क्षे च मन्त्रे तादृश एवा-पेक्ष्यते । तद्यथा—“ अस्मादन्नादस्यै प्रतिष्ठायै ” इत्यादौ । तत्र किं लौकिकः शेषोऽध्याहार्यः, उत यः पूर्वमन्त्रान्तरपठितः “ निर्भक्तो योऽस्मान्द्वेष्टि ” इत्यादिः, स एवानुषञ्जनीय इति ।

किम्प्राप्नोति ?

लौकिकोऽनुषञ्जनाय इति । लौकिको हि शब्दः सर्वार्थो यथेष्टं सर्वत्र विनियुज्यमानो न विरुध्यते । वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतुं शक्यते । तस्माल्लौकिक इति प्राप्ते—

उच्यते, वेदेनैवापेक्षितरूपे वाक्यशेषे समर्पिते निष्प्रमाणलौकिकशेषकल्पनं न युज्यते । तस्माद्वैदिक एव ' निर्भक्तः ' इत्यादिः शेषः ' अस्मादन्नाद् ' इत्यत्रानुषञ्जनीयः ' अस्यै प्रतिष्ठायै ' इत्यत्र च ।

नन्वध्याहारानुषङ्गयोः को विशेषः ? उच्यते, अध्याहारो लौकिकः, अनुषङ्गस्तु वैदिक इति । प्रयोजनमेतच्चिन्तायाः अध्याहारविनाशे स्मार्तं प्रायश्चित्तम्, अनुषङ्गविनाशे तु श्रौतमिति ।

एवमूहप्रवरनाम्नां लौकिकत्वं न मन्त्रत्वम् । " सन्ते वातेन गच्छताम् " (६–१०) इत्यत्र गच्छतामित्येतत्पदमेकवचनान्तत्वात्समग्राङ्गानि यजत्रैरित्यत्रान्वेतुमयोग्यत्वान्नानुषज्यते, तद्व्यवायेन बुद्धिसन्निध्यभावाच्च " सं यज्ञपतिराशिषा " इत्यत्रापि नानुषज्यते । तेनानयोर्गच्छन्तां गच्छतामित्याधाहारौ कार्यौ ।

तत्राध्याहारपक्षाश्रयणे सौकर्याय ते प्रदर्श्यन्ते । तत्र दर्शपूर्णमासयोः " इषे त्वा " इत्यत्र ' छिनद्मि ' इत्याहारः, " ऊर्जेत्वा " इत्यत्र सन्नमयामीति । इमावध्याहारौ सूत्र कृतैवोक्तौ [ ४–२–२, ३ ] । " कर्मणेवाम् " इत्याददे इति [ १–६ ] । "उरु वाताय भव" इति [ १–९ ] ' प्रेक्षे ' इति केचित् । " भूताय त्वा नारातये " [ १–११ ] परिशेषयामाति । " प्राणायत्वा ( १–२० ) इत्यादिषु त्रिषु पिनष्मीति । " चक्षुषे त्वा " [ १–२० ] इत्यत्र ' ईक्षे ' इति, " इषेत्वा " [ १–१४ ] इत्यत्र अधिश्रयामीति । " संज्योतिषां " ( २–९ ) ज्योतिर्गच्छतामिति च । " वसुभ्यस्त्वा " ( २–१६ ) इत्यादिषु अनज्मीनि । " सङ्गच्छतां यज्ञपतिराशिषा " [ ६–१० ] इति च । वरुणप्रघासेषु " अनुत्वा देववीतये " [ ५–९ ] हरामि । " भूतेभ्यस्त्वा " ( ५–१२ ) उद्यच्छामीति । " सुपिप्पलाभ्यस्त्वौषधीभ्यः " ( ६–२ ) प्रतिमुञ्चामाति । यूपायोच्छ्रीयमाणाय ( ६–३–६ ) यूपायपरिवीयमाणायेति च ( ६–३–१४ ) । अग्निमन्थने अग्नये जातायेति ( ५–२–३ ) अग्नये प्रह्रियमाणायेति ( ५–२–४ ) । पशुसमञ्जने " सङ्गच्छतामङ्गानि यजत्राः सङ्गच्छतां यज्ञपतिराशिषेति ( ६–१० ) । शेषनिषेके शमहोभ्यो निषिञ्चामीति ( व–१९ ) । सोमे " स्वाहा यज्ञं मनसः " ( ४–६ ) इत्यत्र 'आरभे' इत्यनुषङ्गः । " स्वाहोरोः " इति " स्वाहा द्यावापृथिवीभ्याम् " (५४–६)

इत्यनयो'र्यज्ञमारभे' इति, "वातात्" (४-६) इत्यस्यां यज्ञमिति, "त्वे रायः" (४-२२) सन्तु "मे रायः" (४-२२) सन्त्विति, "प्रजाभ्यः" (४-२५) ब्रध्नामीति। हविर्धाने स्थूणानिखनने त्रिप्लवे "त्वा" (५-१८) हन्मीति, 'तन्नो सहास्तु' (८-५-१८) 'तन्मेऽस्त्विति' च (८-५-२१) स्तुत्याम्। सोममाने "इन्द्राय त्वा" (६-३२) इति पञ्चसु 'मिमे' इति। "देवेभ्यस्त्वा मरीचिपेभ्यः" (३-७) 'उपमार्ज्मि' इति। ग्रहसादनमन्त्रेषु "प्राणायत्वा" (७-३३) इत्यादिषु साकाङ्क्षेषु सर्वत्र सादयामि' इति, ग्रहग्रहणमन्त्रेषु च सर्वेषु साकाङ्क्षेषु 'गृह्णामि' इति, उपांश्वन्तर्यामाग्रयणोक्थ्यध्रुववर्जम् (७-१, ७-४, ७-२०, ७-२२, ७-२५) शुक्रामन्थिसादने 'सादयामि' इत्यस्याभावः (७-१२, ७-१६)। महावीरसम्भरणे पिण्डादेः आदाने "मखाय त्वा शीर्ष्णे" (३७-३) 'आददे' इति 'परिगृह्णामि' इति वा, सम्भाराभिमर्शने "मखाय त्वा मखस्य त्वा शीर्ष्णे" (३७-४) अभिमृशामि, निधाने (३७-४, ७) 'निदधामि' इति, संसर्गे (३७-७) 'संसृजामि' इति, करणे (३७-७) 'करोमि' इति, अन्तिमाभिमर्शने (३७-७) 'अभिमृशामि' इति, श्लक्ष्णने (३७-८) 'श्लक्ष्णयामि' इति, प्रदहने (३७-९) 'प्रदहामि' इति, "ऋजवे त्वा" (३७-१९ 'उद्वपामि' इति, अजापयोऽवसेके (३७-१०) 'अवसिञ्चामि' इति, "यमाय त्वा" (३७-११) इत्यादिषु 'प्रोक्षयामि' इति, "मधु मधु मधु" (३७-१३) 'आधूनोमि' 'उपवाजयामि' इति वा। चयने प्राणभृच्छन्दस्याविराजासुपधानमन्त्रेषु(१३-५४, १४-१८, १५-४)मया 'उपधीयते' इत्यध्याहारः। प्राणभृत्सु पञ्चस्वपि कण्डिकासु (१३-५४, ५५ ५६, ५७, ५८) दशमे-दशमे मन्त्राऽध्याहाराभावः 'गृह्णामि' इत्यनेन निराकाङ्क्षत्वात्; "आशुस्त्रिवृत्" इति कण्डिकापठितेषु "धर्म चतुष्टोमः" इत्यन्तेषु च (१४-२३) 'मया उपधीयते' इति; वालखिल्यासु च "आयुषे त्वा" (१४-२१) इत्यादिषु 'त्वान्तेषु' अष्टासु मन्त्रेषु 'उपधामि' इति; "यन्त्रीराड्" (१४-२२) इत्यत्र 'असि' इति "मूर्धासि राड्" (१४-२१) इत्यत्र 'असि' इति दर्शनात् अस्याप्यनेन समानार्थत्वात्, पशुशिरसि नासिकयोश्चक्षुषोश्च हिरण्यशकलप्रासने 'प्रास्यामि' इत्यध्याहारश्चतुर्षु मन्त्रेषु "ऋचे त्वा" (१३-३९) 'प्रास्यामि' इत्यादि, "अग्निर्ज्योतिषा" (१३-४०) इत्यस्यां 'अस्तु' इति, पशुशिरस उद्ग्रहणे सहस्राय त्वा

( १३–४० ) 'उद्गृह्णामि' इति, हिरण्यशकलप्रोक्षणे पञ्चमे मन्त्रे 'सहस्राय त्वा प्रोक्षामि' इति, "अश्मन्" ( १७–१ ) 'ते क्षुदस्तु', "मयि ते" 'ऊर्गस्तु' इति । वाजपेये, ऐन्द्रेषु ग्रहेषु ( ९–२, ९–४ ) ग्रहणे नाध्याहारः, अन्येषु सर्वेष्वपि ग्रहणे सादने च 'गृह्णामि' 'सादयामि' इति च, ऐन्द्रेष्वपि सादन मन्त्रेषु भवत्येव, सप्तदशसु ग्रहेषु ( ९–३१ तः ३४ ) सादन एव 'एष ते योनिः सादयामि' इत्याध्याहारः, न ग्रहणे । एवं सौत्रामण्यां च ग्रहणे सादने च । अङ्गालम्भनमन्त्रेषु वक्ष्यते । पितृमेधे "अग्नेर्भ्राजसा" "सूर्यस्य वर्चसा" ( ३५–३ ) इत्यनयाः पुनातु पदस्यानुषङ्गः ॥ ३ ॥

तदेवं मन्त्रस्वरूपे तद्भेदे चोक्ते तेषां प्रकरणप्रमाणेन सामान्येन विनियोगे सिद्धेऽधुना लिङ्गप्रमाणेन विशेषविनियोगमाह—

( कर्मारम्भ प्रकारः )

**तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ॥ १ । ३ । ४ ॥**

तेषां मन्त्राणामारम्भे प्रयोगे अर्थता विहितार्थाभिधानरूपेण सामर्थ्येन लिङ्गेन, अनेन मन्त्रेणायं पदार्थः कर्तव्यः, अनेनेनायमित्येवं रूपा व्यवस्था भवति । यो मन्त्रो यत्पदार्थाभिधानसमर्थः स तत्र नियुज्यत इत्यर्थः ।

कुतः ? तद्वचनत्वात् तमेवार्थं वक्तीति तद्वचनः तस्य भावस्तत्त्वं तस्मात्, यतस्तमेवार्थं वक्तुं शक्नोति नार्थान्तरम् । यथा "उरुप्रथा ऊरुप्रथस्वेति ( १–२२ ) अयं प्रथनमेवाभिधातुं समर्थः, अतस्तत्रैव विनियुज्यते ।

ननु सूत्रकारः प्रतिपदार्थं मन्त्रविनियोगं वक्ष्यत्येव, किमर्थमिदमुक्तम् ? अनुक्तसङ्ग्रहार्थम्, यथा 'प्रवत्स्यन्त्सर्वान्नयेति प्रतिमन्त्रमित्यादौ (४-१३--१३) । ॥ ४ ॥

( अर्थतो व्यवस्थाव्य )

**मन्त्रान्तैः कर्मादिः सन्निपात्योऽभिधानात् ॥ १ । ३ । ५॥**

कर्मसु ये मन्त्राः पठ्यन्ते तेषां मन्त्राणामन्तैः सह कर्मादिः क्रियमाणस्य कर्मणः आदिः सान्निपात्यः संयोजनीयः । कुतः ? अभिधानात् । यतो मन्त्रः पठित एव सन्कर्माभिदधाति वक्ति नान्यथा ततो मन्त्रेण स्मारितं सत्कर्मानुष्ठीयते । सकलस्य मन्त्रस्य समाप्तौ विनियुक्तत्वात्सकलेन सम्पादितं स्मरणं कर्माङ्गम् । अतः सकलस्य मन्त्रस्य समाप्तौ तज्जनितं स्मरणं यावदेव नापभ्रष्टं तावदेव प्रयोगः कर्तव्यः । तेन मन्त्रान्तस्य कर्मादेश्च सन्निपातः ॥ ५ ॥

## अनियमं वात्स्यः ॥ १ । ३ । ६ ॥

वात्स्य आचार्यो मन्त्रप्रयोगस्य कालानियमं ब्रवीति । पूर्वं क्रियमाणे कृते वा कर्मणि मन्त्रः पठितव्य इति । मन्त्रस्य कर्माभिधायकत्वमेवमपि भवत्येव ॥ ६ ॥

सिद्धान्तमाह—

## आदिं त्वाचार्याः ॥ १ । ३ । ७ ॥

तुशब्दो वात्स्यमतनिरासार्थः । आचार्याः सर्वेऽपि मुनयः कर्मण आदिमेव मन्त्रान्तैः सह योजयन्ति, नानियमः । यतो मन्त्रेण स्मृतं कर्म कर्तव्यम् । तदुक्तम्—

×अनुष्ठाने पदार्थानामवश्यम्भाविनी स्मृतिः ।
अनन्यसाधनानन्यकार्यैर्मन्त्रैः प्रसाध्यते ॥

नतावदनुष्ठानवेलायामस्मृतः कश्चिदपि पदार्थः शक्यः कर्तुमित्यवश्यम्भाविन्या स्मृत्या योग्यसाधनमात्रापेक्षणाद्यत्किञ्चिद् ब्राह्मणपदार्थानुसन्धानं वा पूर्वपदार्थप्रत्यवेक्षणं वा सूत्रग्रन्थो वा आत्मीयग्रहणैकवाक्यानि वोपद्रष्टा वा साधनं ग्रहीतुमारभते ।

तत्रानन्यप्रयोजनात्प्रकरणे पठ्यमानान्नान्यत्किमप्येभिः कर्तव्यमित्येवं प्रयोगवचनेन गृह्यमाणान्मन्त्रानुपलभ्य यादृशेन वाक्येन स्मृतिः कर्तुमाकाङ्क्ष्यते तादृग्रूपा एत इति विदित्वा लिङ्गप्रकरणानुमितया श्रुत्या विनियोगे सत्यभिधानार्थता विज्ञायते । ततश्चोपायान्तराण्यप्रमाणकत्वान्निवर्तन्ते । नियमादृष्टसिद्धिश्च मन्त्रैरेव स्मृतं कर्म कृत्वाऽभ्युदयकारि भवतीत्यवधार्यते ।

यत्र च मन्त्रास्तत्र विधिवाक्येनैव तदसम्भवे उपायान्तरेणापि पदार्थस्मृतिः कार्या ॥ ७ ॥

## त अप्युक्ताः ॥ १ । ३ । ८ ॥

ते मन्त्राः सूत्रमध्ये आद्युक्ता आदिमात्रेणोक्ताः सन्तः प्रयोगकाले सकलाः प्रयोज्याः । नतु सूत्रमध्ये यावानंश उच्यते तावन्मात्र इति ॥ ८ ॥

## परादिना पूर्वान्तः ॥ १ । ३ । ९ ॥

परस्य मन्त्रस्य सूत्रोपात्तेनादिना चिह्नभूतेन पूर्वस्य मन्त्रान्तो ज्ञेयः ।

---

× अनुष्ठान इत्यारभ्यावधार्यत इत्यन्तो ग्रन्थस्तन्त्रवार्तिकादक्षरश उद्धृत इति प्रतिभाति ।

नन्वेतन्न वक्तव्यम्, वाक्यलक्षणेनैव मन्त्रान्तस्य सुगमत्वात् । सत्यम्, क्वचिद्वाक्यसमूहस्यैकमन्त्रत्वसिद्ध्यर्थं पुनरुच्यत इत्यदोषः । तद्यथा—“ विश्वेषां देवानां भागधेयीस्थ ” इति समाप्तेऽपि वाक्ये “ अमूर्या उपसूर्ये ” (६–२४) इत्यादि प्रयुज्यते । यथा वा अष्टगृहीतं जुहोति सन्ततमुद्गृह्णन् “ युञ्जानः ” ( १६–२, ७ ) इति । अत्राष्टानामेकमन्त्रत्वम् । तथा “ देवस्यत्वा ” (३–२, ८) इत्यभ्रिमादाय इत्यत्र त्रयाणां मन्त्रत्वम् । चित्यं गच्छति “ पञ्चदिशः ” ( १८–३, १८ ) इत्यादौ च ॥ ९ ॥

## उपाꣳशु प्रयोगः श्रुतेः ॥ १ । ३ । १० ॥

तेषां यजुषां यजुर्वेदमन्त्राणां कर्मसु उपांशु प्रयोगो भवति । कुतः? श्रुतेः “ उच्चैर्ऋचा क्रियत उच्चैः साम्ना उपांशु यजुषा” इति शाखान्तरे श्रवणात् । स्वशाखायामपि “ स उपाꣳशु यजुर्भिश्चरति ” ( ४–६–७–१८ ) इत्यादिश्रुतेश्च । अत्र तेभ्यस्त्रयो वेदा अजायन्त इति वेदान्प्रक्रम्य मध्ये “ उच्चैर्ऋचा क्रियत ” इत्यादीनि वाक्यानि पठित्वा पुनरपि वेदैनैवोपसंहारोऽस्ति । तेनात्र ऋगादयः शब्दा वेदोपलक्षकाः । तेन ऋचा ऋग्वेदेन विहितं साम्ना सामवेदेन विहितं चोच्चैः, यजुषा यजुर्वेदविहितं चोपांशु इति ।

अस्य सूत्रस्येष्टिपशुसोमव्यतिरिक्तं कर्माग्निहोत्रादिकं विषयः । एतेषु विशेषस्य वक्ष्यमाणत्वात् ॥ १० ॥

## न सम्प्रैषाः ॥ १ । ३ । ११ ॥

सम्प्रैषा निगदाः ‘ प्रोक्षणीरासादय’ ‘ अग्नीदग्नीन्विहर ’ ‘ यजमान वाचं यच्छ ’ ( २–६–३४, ९–७–५, २–३–२ ) इत्येवमादयः, याजुर्वेदिका अपि सम्प्रैषा उपांशु न प्रयोज्याः । अन्यबोधनार्था हि ते । न चोपांशूच्चारितैरेभिरन्यस्य बोधनं सम्भवति । तस्मात्त उच्चैरेव प्रयोज्याः ॥ ११ ॥

शाखान्तरे दर्शपूर्णमासयोः श्रूयते ‘ बर्हिर्लुनाति ’ इति । तत्रेदं चिन्त्यते किं बर्हिःशब्दः संस्कारनिमित्त उत जातिनिमित इति । तत्र बर्हिःशब्दस्य शास्त्रे सर्वत्र संस्कृतेष्वेव तृणेषु प्रयोगात्, यूपाहवनीयादिवत् संस्कारवाची बर्हिःशब्द इति प्राप्त आह—

## कौशं बर्हिः ॥ १ । ३ । १२ ॥

बर्हिः कौशम् । कुशा दर्भाः तस्येदं कौशम् । कुशमात्रमेव बर्हिःशब्देनोच्यते न संस्कारः । कुतः? अन्वयव्यतिरेकाभ्यां जातिवाचित्वाद्बर्हिःशब्दस्य । यत्र यत्र बर्हिःशब्दप्रयोगस्तत्र तत्र जातिरित्यस्या व्याप्तेर्लौके वेदे च नास्ति व्यभिचारः । संस्कारव्याप्तेस्तु लौकिकप्रयोगे व्यभिचारो दृश्यते, क्वचिद्देशविशेषे लौकिकव्यवहारे जातिमात्रमुपजीव्य विना संस्कारं बर्हिःशब्दः प्रयुज्यते ' बर्हिरादाय गावो गताः' इति । तस्माज्जातिवाची बर्हिःशब्दः । असंस्कृतं कुशमात्रं बर्हिःशब्देनोच्यत इत्यर्थः । प्रयोजनम्—" बर्हींषि प्राग्च्युदश्चि च प्रास्यति " ( ६–२–१८ ) इत्यादौ संस्कारा न कर्तव्याः । स्मृतौ—

कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः ।
काशाभावे गृहीतव्या अन्ये दर्भा यथोचिताः ॥
दर्भाभावे स्वर्णरूप्यताम्रैः कर्मक्रियाः सदा ।
कुशाकाशशरा दूर्वा यवगोधूमबाल्वजाः ॥
सुवर्णं राजतं ताम्रं दश दर्भाः प्रकीर्तिताः ।
स्नाने होमे तथा दाने स्वाध्याये पितृतर्पणे ॥
सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा ।
सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रथितं न वा ॥
सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ।
नोच्छिष्टं तत्सदर्भं च दर्भोच्छिष्टं तु वर्जयेत् ॥ इति ॥ १२ ॥

## अर्थात्परिमाणम् ॥ १ । ३ । १३ ॥

अग्न्यागारादौ वसोर्धारा होमे च स्रुचः स्रुवस्य च अर्थात्परिमाणं भवति । यावता परिमाणेनार्थः प्रयोजनं सिद्ध्यति तावत्परिमाणं भवतीत्यर्थः परिमाणान्तरस्यायुक्तत्वात् । प्रयोगाद्बहिरेव शुष्केष्टिवत् " वाजश्चमे " इत्यत आरभ्य " वेट् स्वाहा " ( १८–१ तः २९ ) इत्येतत्पर्यन्तं पठित्वा कस्मिंश्चित्पात्रे सन्ततं घृतं स्रुक्प्रणालिकया निनीय तस्याज्यस्य तोलनाद्युपायेन परिमाणं निश्चित्य तावदाज्यं यावत्परिमाणायां स्रुचि याति तावत्परिमाणां तां स्रुचं कुर्यात् ।

तस्याज्यस्य पञ्चमभागसङ्ग्राहकश्च स्रुवः कार्यः । एवं यदा षडब्दप्रत्याम्नाये पावकेष्टिवैश्वानरेष्ट्यादिकं क्रियते तदापि वेदेः पश्चाद्भागोऽर्थात्तावत्परिमाणो विपुलः कार्यो यावता अवरोक्तमुत्तर१ हविषि " (१–१०–५) इति न्यायेन सर्वेषामुदक्संस्थमासादनं सम्भवति । तदनुसारेण प्राचीप्रमाणं पुरस्तात्तिर्यक्प्रमाणं च पादोनकल्प्यम् । तदुक्तं शतपथे–" यावती स्वयं मनसा मन्येत तावतीं कुर्यात् " (१–२७–१४) इति । सूत्रे चोक्तम्—" अपरिमिता वा " (७–३–१७) इति । अपरिमितशब्दोत्र प्रमाणानियमपर इति वक्ष्यामः । एवं वर्हिर्हविर्द्रव्यपरिमाणानुक्तौ सर्वत्रोह्यम् ॥ १३ ॥

( वन्धनानि विषमधातूनि )

## अयुग्धातूनि यूनानि ॥ १ । ३ । १४ ॥

इध्मवन्धनवर्हिर्बन्धनार्थानि यूनानि सन्नहनानि रज्जवोऽयुग्धातूनि भवन्ति । धातवस्तृणमुष्टिप्रक्षेपाः अयुजो विषमा एकत्रिपञ्चसप्तनवादिविषमसङ्ख्या धातवो येषां तान्ययुग्धातूनि । तथाचापस्तम्बः " त्रिधातु पञ्चधातु वा शुल्वं करोति" इति । शुल्वं रज्जुमित्यर्थः । " पञ्चविंशतिकुशमयानि यूनानि " इति यज्ञपार्श्वे । तथा " समूलानाममूलानां वा दर्भाणां पूर्ववत् शुल्वं कृत्वोदगग्रं निधायेती"ध्मप्रस्तावे । मानवे च " शुल्वं प्रतिदधात्ययुग्धातु प्रदक्षिणमि"ति । तित्तिरिसूत्रे " अथ त्रिरन्वाहितं शुल्वं कृत्वे"ति ॥१४॥

अथ वर्हिषो बन्धनप्रकारमाह—

( बर्हिषां वन्धनप्रकारः )

## प्रागग्रे यून उदगग्रं बर्हिराचनोति ॥ १ । ३ । १५ ॥

प्रागग्रे यूने प्रागग्रे संनहने वन्धनार्थायां रज्जौ उदगग्रं वर्हिराचिनोति वन्धनार्थं स्थापयति ॥१५॥

अथेध्मबन्धनस्य प्रकारमाह—

( इध्मबन्धनप्रकारः )

## उदगग्रे प्रागग्रमिध्मम् ॥ १ । ३ । १६ ॥

आचिनोतीत्यनुवर्तते । उदगग्रे यूने सन्नहने प्रागग्रमिध्ममाचिनोति वन्धनार्थं निदधाति ॥१६॥

## प्रत्यग्ग्रन्थीनवगूहति ॥ १ । ३ । १७ ॥

इध्मबर्हिर्बन्धनार्थानां यूनानां ग्रन्थिमवगूहति, यूनेन गाढं बध्वा यूनस्याग्रमूले सङ्कल्प्य प्रदक्षिणमावेष्ट्य इध्मबर्हिषोरग्रभागे प्रोतयित्वा पश्चादिति तयोर्मूलभागे अवगूहति प्रेरयति । प्रत्यक् शब्देन इध्मबर्हिषोः पश्चाद्भागो मूलभाग इत्युच्यते । दिग्वाचिनो बर्हिष्युदगग्रे निहिते असम्भवात् ।

काठके " ग्रन्थिं कृत्वा पुरस्तात्प्रत्यञ्चमपकर्षति " इति ।

मानवे—"शुल्बस्यान्तौ समायम्य पूषाते ग्रन्थिमिति प्रदक्षिणमावेष्टयति पश्चात्प्राञ्चमपकर्षति " इति ।

तैत्तिरीयेऽपि " पश्चात्प्राञ्चमुपगूहतीति " इति ।

आपस्तम्बः–"पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चाद्वा प्राञ्चम्" इति ॥१७॥

( इध्मस्याष्टादशत्वादिपालाशत्वादिकम् )

## अष्टादशेध्मं परिधिवृक्षाणाम् ॥ १ । ३ । १८ ॥

परिधीनां वृक्षाः पालाशवैकङ्कतादयः परिवृक्षाः, तेषां परिधिवृक्षाणां सम्बन्धिनमष्टादशसङ्ख्यकाष्ठकमिध्मं कुर्यात् ।

मानवे–"समूलैर्दर्भैः पालाशं खादिरं रौहीतकं वाष्टादशदार्विध्मं सन्नह्यति, त्रींश्च परिधीन् यो यज्ञियवृक्षस्तस्य " इति ।

काठके—" अष्टादशदारुं शुष्कं समानवृक्षस्य सन्नह्यति विंशतिमिष्टौ पशुबन्धे च " इति । अत एव सामिधेनीविवृद्धौ काष्ठवृद्धिर्भवति ह्रासे च ह्रासो न भवति पित्र्यादौ ।

तथाहापस्तम्बः—" सामिधेनीविवृद्धौ काष्ठानि वर्धन्ते प्रकृतितो ह्रसमानासु प्रकृतिवत् " इति ।

उपसत्सु तु "मात्रावदिध्मबर्हिः" (८–२–२४) इतिवचनाद्ध्रासः ।

इध्मप्रमाणं चारत्निरिति यज्ञपार्श्वे निगमे च । प्रादेशद्वयमिध्मस्य प्रमाणमिति कात्यायनः (कर्मप्रदीपे. १–८–१९)

तथा—"समित्पवित्रं वेदं च त्रयं प्रादेशसम्मितम् ।
इध्मस्तु द्विगुणः कार्यः परिधिस्त्रिगुणः स्मृतः ॥
स्मार्ते प्रादेश इध्मो वा द्विगुणः परिधिस्ततः ॥" इति ॥१८॥

## एकविंशतिं वा ॥ १ । ३ । १९ ॥

अथवा एकविंशतिमेकविंशतिसङ्ख्यकाष्ठकमिध्मं कुर्यात् । तथा चापस्तम्वः-"खादिरं पालाशं वैकविंशतिदारुमिध्मं करोति ॥१९॥

## ततः परिधीनेके ॥ १ । ३ । २० ॥

एके आचार्यास्तत एकविंशतिसङ्काष्ठकादिध्मात्त्रीणि काष्ठान्यरत्निमात्राण्येवोपादाय परिधीन्परिदधति। "तद्धैक इध्मस्यैवैतान्परिदधति (१-३-३-१८) इति श्रुतेः ।

अथ वैकमेवेदं सूत्रम्—"एकवि शतिं वा ततः परिधीनेके" इति। एके आचार्या विकल्पेन एकविंशतिसङ्ख्यकाष्ठमिध्मं कुर्वन्ति। तत इति तस्मादेवैकविंशतिकाष्ठकेध्मात्परिधीन्परिदधति च। एतदेव युक्ततरम् । आपस्तम्वसूत्रे एकविंशतिकाष्ठानां विभागदर्शनात् ।

तथा चाहापस्तम्वः—"खादिरं पालाशं वैकविंशतिदारुमिध्मं करोति, त्रयः परिधयः पालाशकार्ष्मर्यखादिरौदुम्बरविल्वरोहीतकविकङ्कतानां ये वा यज्ञिया वृक्षा आर्द्राः शुष्का वा सत्वच्काः स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्यो ह्रसिष्ठ उत्तरार्ध्यो द्वे आघारसमिधावनुयाजसमिदेकविंशीतिसमूलानाममूलानां वा दर्भाणां पूर्ववच्छुल्वं कृत्वोदगग्रं निधाय" इति ।

अत एवंविधमेकीयमतम्—यदेकविंशतिकाष्ठक इध्मः। तस्मिन्पक्षे चेध्मादेव त्रीणि काष्ठान्यादाय परिधिपरिधानमिति ॥

बन्धनान्तरमिध्मवर्हिषोर्भूमौ निधानं न कार्यम्। आपस्तम्वसूत्रे "अनधो निदधाति"इत्युक्तत्वात् ।

"तद्धैक इध्मस्यैवैतान्परिधीन्परिदधाति" (१-३-३-१८) इत्यत्र हरिस्वामिनः "तदु तथा न कुर्यादनक्लृप्ता हि तस्यैते भवन्ति".(१८) इति वाहुमात्रैः परिधिभिरार्द्रैश्च भवितव्यम्, इध्मस्तु शुष्क इन्धनत्वादेव द्विमादेशश्च, तेन ते इध्मैकदेशभूताः परिधित्वायासमर्थाः स्युः, तदिदमाह—"अभ्याधानाय हि" (१८) इति शुष्को ह्यसावाधेयः, यावत्स्वरमात्र आहवनीयस्वरे सम्भवतीत्यभिप्रायः। यस्तु परिधिबुद्ध्याऽऽहरति सोऽवश्यं वेष्टनीयादग्निस्वरादतिरिक्तमेवाऽऽहरति। अग्निवेष्टनं च दाहभयान्न शुष्कमिति त एवाक्लृप्ता इति ॥२०॥

## अपरिमितं प्रणयनीयं त्रियूनम् ॥ १ । ३ । २१ ॥

प्रणयनस्यायं प्रणयनीयः, तं प्रणयनीयमग्निप्रणयनार्थमिध्ममपरिमितकाष्ठकं त्रियूनं तिसृभिः संनहनरज्जुभिर्बद्धं कुर्यात् । त्रिणी यूनानि बन्धनानि यस्य स त्रियूनः तं त्रियूनमिति । अपरिमितत्वं च प्रागुक्तेध्मकाष्ठसङ्ख्यापेक्षयातिशयेनाधिकसङ्ख्यकाष्ठकत्वम् । तेन चतुर्विंशतिसामिधेनीको य इष्टकापशुस्तत्र सप्तविंशतिः काष्ठानि भवन्ति । ततश्च प्रणयनीये ततोऽप्यधिकानि अष्टाविंशतिप्रभृतीनि इच्छासङ्ख्यानि काष्ठानि भवन्ति ॥ २१ ॥

( वेदबन्धनकालः )

## निरूप्याज्यं वेदोऽसीति यजमानो वेदं करोति ॥१।३।२२॥

यजमान आज्यं निरूप्य प्रथमं वक्ष्यमाणप्रकारेणाज्यनिर्वापमाज्यस्थाल्यां कृत्वा "वेदोऽसि" (२–२१) इत्यनेन मन्त्रेण वेदं करोति । अस्य मन्त्रस्यान्यत्र ऊहो भवति । "तेनावाभ्यां वेदो भूयाः" इति द्वियजमानके, "तेनास्मभ्यं वेदो भूयाः" इति बहुयजमानके "देवपितृभ्यो वेदो भव" इति पित्र्याम् ॥ २२ ॥

कीदृशं तमित्यपेक्षायामाह—

## कुशमुष्टिꣳसव्यावृत्तं वत्सजानु त्रिवृतं मूतकार्यं वा पशुब्रह्मवर्चसान्नाद्यकामा यथासङ्ख्यम् ॥ १ । ३ । २३ ॥

पशुब्रह्मवर्चसान्नाद्यकामा यजमाना यथासङ्ख्यं यथोपदेशक्रमेण एवमाकारं वेदं कुर्युः । तत्र पशुकामः कुशमुष्टिं सव्यावृत्तं प्रदक्षिणावृत्तं वत्सजानुं वेदं करोति ।

अस्य निर्माणप्रकारः कठमैत्रसूत्रादिषु विलोकनीयः । ब्रह्मवर्चसकामः कुशमुष्टिं त्रिवृतं करोति, अन्नाद्यकामो मूतकार्यम्, इति यथासङ्ख्यशब्दार्थः । वत्सजानुरिति वत्सजानुसदृशः । त्रिवृत् त्रिगुणः । मौञ्जं त्रिवृद्द्रव्यम् मुञ्जरज्जुवत्त्रिवृतो मुञ्जविधाः "त्रिवृतं परिव्ययती" त्यादौ (६–३–१६) तथैव दर्शनात् । "मेखलायां वेणिं त्रिवृतमि"ति (७–३–२६) पृथङ्निर्देशात्त्रिवृच्छन्देन वेण्याकारता यत्कैश्चिदुक्ता तत्केनाभिप्रायेणेति न एव विद्मः ।

मूतो धान्यावापपात्रं तृणवल्यादिनिर्मितं तद्वत्क्रियत इत्यर्थः । तथा च

मनुः "वेदं करोति वत्सज्ञुं प्रसव्यमावेष्ट्य तूलैर्दक्षिणोत्तरतूलेषु शुल्वं प्रतिनिधाय त्रिरावेष्ट्य सन्नह्यत्युत्तरमुत्तरं प्रादेशमात्रे शुल्वात्परिवास्योत्करे मूलानि गमयति तूलानि निदधाति वेदं कृत्वा वेदिं करोति" इति ।

तैत्तिरीये–वेदं करोति वत्सजानुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृतं तेजस्कामस्योर्ध्वाग्रं स्वर्गकामस्य" इति ।

लौगाक्षिः—"वेदं करोति दर्भमुष्टिं प्रसव्यमावेष्ट्योपमुज्याग्राणां शुल्वं कृत्वा त्रिः परिहृत्य गुणेषु शुल्वान्तमवकृष्यायम्य शुल्वात्प्रादेशे छित्वाग्राणीध्मे निधायोत्करे मूलानि ततो वेदिकरणम्" इति ।

आपस्तम्बश्च—"दर्भाणां वेदं करोति वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृच्छिरसं ब्रह्मवर्चसकामस्य शुल्वात्प्रादेशे परिवास्य वेदपरिवासनानि निदधाती"ति ।

त्रिवृदेकशिराः, त्रिवृच्छिराः, त्रीणि शिरांसीति केचित् । कामाभावेऽप्येता आकृतयः, अकामस्यान्यस्याविधानात् । परिवासनानि सर्वाण्येव वेदाग्राणि इति धूर्तस्वामिना व्याख्यातम् ।

अत एव सूत्रकृता वेदबन्धनं परिभाषायां सूत्रितं वेदाकाराणां सर्वसाधारणत्वज्ञापनाय । अन्यथा तु ते गोदोहनादिवद्गुणफलसम्बन्धात्प्रकृतावेव निवेशयेयुर्न विकृताविति । तस्माद्दर्शपूर्णमासप्रकरणान्निष्कृष्यात्र सर्वसाधारणं परिभाषोपबन्धनमध्ये सूत्रितम् । वेदस्य प्रमाणं परिशिष्ट उक्तम् "वेदं समित्पवित्रं च त्रयं प्रादेशसम्मितम्" इति ॥ २३ ॥

( आङोन मर्यादार्थः )

## आमुष्मादिति कर्मसु तच्च ॥ १ । ३ । २४ ॥

कर्मसु पश्वादिषु यत्र यत्र आ अमुष्मादित्येवमाङ्प्रयोगः क्रियते सूत्रमध्ये, तद्यथा "आ प्रयाजेभ्यः" (६–४–१) "आ इडायाः (३–१–४) "आ वैश्वदेवात् (९–१२–८) तत्र तत् चाप्यर्थे तदपि कर्म कर्तव्यत्वेन ज्ञेयम्, यदाङा सम्बद्धं प्रयाजादिकम् । सर्वत्राङभिविध्यर्थो ज्ञेयो न मर्यादार्थः । यदाङा संयुक्तं तदपि कर्तव्यमध्ये ज्ञेयम् । न त्ववधित्वेनेत्यर्थः ॥ २४ ॥

( अन्तशब्दार्थः )

## अन्तवचने च ॥ १ । ३ । २५ ॥

"शम्य्वन्तं भवति" (३–७–१३) "इडान्तं भवति" (५–६–२५) इत्येवमादावन्तवचने चकारात्तच्चेति पूर्वसूत्रादनुकृष्यते, तदप्यन्तसंयुक्तं शम्य्विडादिकं कर्तव्यमध्ये ज्ञेयम् । न त्वन्तशब्दः समीपार्थे परिकल्प्यः । तत्समीपे ततोऽर्वाक्स्थातव्यमिति ॥ २५ ॥

( उद्धरणनियमः )

## प्रतिकर्मोद्धरणमप्रसङ्गे ॥ १ । ३ । २६ ॥

प्रतिकर्म कर्म–कर्म प्रति सर्वेषु कर्मसु पृथक्पृथगाहवनीयदक्षिणाग्न्यार्गार्हपत्यादुद्धरणं कर्तव्यम् । न त्वाधानकाल एवोद्धृतौ गार्हपत्यवत्सर्वं कर्म प्रति साधारणौ भवतः । परं अप्रसङ्गे सति अन्यार्थमनुष्ठितस्यान्येनोपजीवनं प्रसङ्गः, न प्रसङ्गः अप्रसङ्गः तस्मिन्निति, तेन यदि दर्शपूर्णमासपश्वाद्यर्थमुद्धृतौ अनयष्टत्तौ लभ्येते नित्यकर्मकाले तदा तत्कर्मार्थे पुनः पृथगुद्धरणं न क्रियते, तयोरेव तदपि नियतकालीनं क्रियते, यथा अग्निहोत्रमागतोपस्थानादिकं च पुनराधानानन्तरं धारणे कृते विकृतेष्टि पशुचातुर्मास्यादिकं च ॥ २६ ॥

## अपवृत्तकर्मा लौकिकोऽर्थसंयोगात् ॥ २७ ॥

अपवृत्तं समाप्तं कर्म यस्मिन्सोऽपवृत्तकर्मा लौकिको भवति । वैदिकमाहवनीयत्वं संस्काररूपं ततोऽवगच्छतीत्यर्थः ।

कुतः ? अर्थसंयोगात् । यदर्थमुद्धृतस्तस्य तेनार्थेन प्रयोजनेन संयोगात् । तेन यत्कर्मार्थमुद्धृतस्तत्समाप्त्यनन्तरं लौकिको ज्ञेयः । अत ऊर्ध्वमाहवनीयशब्देन विहितं कार्यं तत्र न कर्तव्यमित्यर्थः । अतश्च पौर्णमास्यादौ यदि ब्रह्मच इष्टयः पृथक्तन्त्राः क्रियन्ते तदा प्रतीष्टि पृथक् पृथगेवोद्धरणं कार्यम्, न सकृदुद्धृत एव सर्वासामनुष्ठानमिति ॥ २७ ॥

( अनारभ्याधीतवाक्यानि )

## अप्रकरणोत्पत्तिरनारभ्यवाद आश्रयित्रात्सर्वगुणः ॥१।३।२८॥

न विद्यते कस्यचित्कर्मणः प्रकरणे उत्पत्तिर्यस्य असौ अप्रकरणोत्पत्तिः । किञ्चित्कर्मारभ्योपक्रम्योद्यते उच्यत इत्यारभ्यवादः, न आरभ्यवादोऽनारभ्य-

वादः । यथा " पर्णमयी जुहूर्भवति " " खादिरः स्रुवो भवति " इत्यादिर्यो विधिः कस्यचित्कर्मणः प्रकरणे पठितो न भवति, वाक्यान्तरेण च कर्मविशेषे विनियुक्तो न भवति, अमुष्मिन् कर्मणि खादिरः स्रुवो भवतीत्येवंविधः, यस्य प्रकरणेन वाक्येन चाङ्गत्वं न सम्भवति स एवं विधः पर्णमयीत्वखादिरत्वादि-विधिः सर्वगुणो भवति प्रकृतावकृतेश्च साधारण एवोपदिष्टो भवति ।

कुतः ? आश्रयित्वात्, आश्रयोऽस्यास्तीत्याश्रयी तस्य भावस्तत्त्वं तस्मात् । जुह्वा स्रुवेण चाश्रितत्वात्पर्णमयीत्वखादिरत्वादेः। यतोऽव्यभिचरितक्रतुसम्बन्धवतीं जुहूमाश्रित्य तद्धेतुः पर्णवृक्षो वाक्येन विधीयते, या जुहूः सा पर्णमयीति। एव-मव्यभिचरितक्रतुसम्बन्धवन्तं स्रुवमाश्रित्य तत्प्रकृतिभूतः खादिरवृक्षो वाक्येन विधीयते, यः स्रुवः स खादिर इति । वाक्यं च प्रकृतिविकृत्योस्तुल्यमेव वर्तते, उभयत्राश्रयभूतयोः स्रुवजुह्वोः सत्त्वात् । अतः खादिरत्वस्य पर्णमयत्वस्य चाश्र-यित्वात्स्रुवजुह्वोः श्रितत्वात्, स्रुवजुह्वोश्च प्रकृतिविद्यमानत्वात् ॥२८॥

एवंविधोऽनारभ्यवादः सर्वगुणः प्रकृतिविकृत्योरुभयोरङ्गमिति प्राप्ते सिद्धान्तमाह—

## प्रकरणे चाविशेषात् ॥१।३।२९॥

चकारोऽवधारणे । निपातानामनेकार्थत्वात् । प्रक्रियन्तेऽस्मिन्धर्मा इति प्रकरणं प्रकृतिः, अप्रकरणोत्पत्तिरनारभ्यवादरूपो विधिः प्रकरण एव प्रकृता वेव निविशते, नोभयत्र प्रकृतौ विकृतौ चेति ।

कुतः ? अविशेषात् । यतश्चोदकः प्रकृतितः सर्वमङ्गजातं प्रकरणपठितम-नारभ्यवादप्रापितं चाविशेषेण विकृतौ प्रापयति । तथाहि किमयं विधिर्विकृतौ चोदकात्पूर्वं निविशते पश्चाद्वा ? नाद्यः, आश्रयभूतयोः स्रुवजुह्वोश्चोदकमन्तरेणा-सम्भवात् । अतोऽनेन विधिनाश्रयभूतस्रुवजुह्वोश्चोदकमन्तरेणासम्भवात् । अतो-ऽनेन विधिनाश्रयभूतस्रुवजुहूलाभार्थं विकृतौ चोदकप्रवृत्तिः प्रतीक्षणीया । पश्चादयं विधिर्निविशत इति द्वितीयपक्षे पर्णत्वं खादिरत्वं च जुह्वा स्रुवेण च सहैव चोदकं नातिदिश्यते । तत्र चोदकेन प्रापिते प्रापितत्वात्पुनर्विधेर्वैयर्थ्या-दनारभ्यविधेः प्रकृतावेव निवेश इति सिद्धान्तः ।

ननु विकृतावनारभ्यविधिनैव पर्णमयीत्वे खादिरत्वे च प्रापिते पश्चाच्चो-दकस्तद्वर्जमङ्गानि प्रापयिष्यति । एवं द्विरुक्तिता दोषो न भविष्यति । मैवम् ।

यतो वैकृतस्य प्रधानस्य अनारभ्यविधिं प्रत्यपेक्षा नास्ति, चोदनासारूप्याभावात् निराश्रयस्य पर्णत्वादेर्विधातुमशक्यत्वाच्च । अतो वैकृतं प्रधानं धर्मापेक्षं सच्चोदना सारूप्यात्प्राकृतानेव धर्मान्प्रथमं गृह्णाति तदन्तर्भूतं पर्णत्वादिकं चेति सिद्धम्॥२९॥

## दर्शनाच्च ॥१।३।३०॥

विकृतौ प्रयाजादीनां प्राकृतानां धर्माणां दर्शनादप्येवं ज्ञायते यदनारभ्य-वादा विकृतौ चोदकात्पूर्वं न निविशन्त इति । यदि पूर्वं निविशेयुस्तदा वैकृतं प्रधानमारभ्याविधिनैव पूरितं सन्निराकाङ्क्षत्वात्प्राकृतान्यङ्गानि न गृह्णीयात्, तदा च विकृतौ प्रयाजादीनां प्राकृतानां दर्शनं न स्यात्, अस्ति च, तथा ह्यश्व-मेधे "अथ सावित्रिमिष्टिं निर्वपति" (१३-४-२-६) इति प्रकृत्य तस्यै प्रयाजेषु तापमानेषु" (८) इति । अत्र गाथागानविधिपरे वाक्ये प्राकृतान्प्रया-जान्दर्शयति । पित्र्यां च "स तत एव प्राक्स्तम्वयजुर्हरति" (२-६-१-१२) इत्यत्र स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति (१२) इति यज्ञोपवीतित्वविधिपरे वाक्ये बहून्प्राकृतान्पदार्थान्दर्शयति, ते च प्राकृतधर्मसापेक्षत्वे एव प्रयुज्यन्ते नान्यथा, तस्मादनारभ्याधीताः प्रतिपत्पक्षाः सन्ति । ते यदि सर्वार्थाः, तर्हि विकृतावपि ते भवन्ति, यदि प्रकृतावेवानारभ्यविधेर्निवेशः तदा तेषां प्रतिपत्प-क्षाणां विकृतावप्रयोगः पुरुषार्थत्वेन विकृतौ प्राप्त्यभावादिति ॥३०॥

## वैकङ्कतानि पात्राणि ॥१।३।३१॥

यज्ञपत्राणि सर्वाणि वैकङ्कतानि विकङ्कतवृक्षकाष्ठघटितानि भवन्ति, "ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्षः" (२-२-४-१०) इति श्रवणात्सामान्यसूत्रमेतत् ॥३१॥

अस्यापवादमाह—

## खादिरः स्रुवः ॥१।३।३२॥

स्रुवः खादिरः स्यात् ॥३२॥

## स्फ्यश्च ॥१।३।३३॥

चकारात्स्फ्यो वज्रोऽपि खादिरः स्यात् । "खादिरः स्फ्यः" (३-६-२-१२) इतिश्रुतेः ॥३३॥

## पालाशी जुहूः ॥१।३।३४॥

हूयतेऽनेनेति जुहूः स्रुक्, सा च पालाशी पलाशवृक्षकाष्ठनिर्मिता भवति । "यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति" इति श्रुतेः ॥३४॥

## आश्वत्थ्युपभृत् ॥१।३।३५॥

उपभृत्संज्ञका स्रुक् आश्वत्थी अश्वत्थकाष्ठघटिता भवति ।

ध्रुवा तु वैकङ्कती भवति "वैकङ्कतानि पात्राणि (३१) इत्यनेनैवापवादात् होमसाधनत्वाच्च । तया हि समिष्टयजुर्हूयते "तिष्ठन्ध्रुवया समिष्टयजुर्जुहोति" इति शाखान्तरश्रुतेः । अत एव मैत्रकठापस्तम्बसूत्रेषु वैकङ्कती ध्रुवेति पठ्यते, तेषां हि वैकङ्कतानि पात्राणीति सामान्यवचनं नास्ति ॥३५॥

## वारणान्यहोमसंयुक्तानि ॥१।३।२६॥

होमेन संयुक्तानि, यैर्होमः क्रियते तानि होमसंयुक्तानि न होमसंयुक्तान्य-होमसंयुक्तानि । यैर्होमो न क्रियते तानि वारणानि भवन्तीत्यर्थः। परिशेषाद्यानि होमसंयुक्तानि होमसाधनानि तैर्होमः क्रियते तानि वैकङ्कतानि ।

तत्र वारणान्युदाह्रियन्ते–उलूखल–मुसल–कूर्च–इडापात्री–पिष्टपात्री–पुरो-डाशपात्री–शम्या–शृतावदान–अभ्रि–उपवेष–अन्तर्धानकट–प्राशित्रहरण–षड-वत्त–ब्रह्मासन–यजमानासन–होतृषदनानि;

तत्र–उलूखलमुसलयोर्विशेषः "मुसलोलूखले वार्क्षे स्वायते सुदृढे तथा इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च" इति । तथा "खादिरं मुसलं कार्यं पालाशः स्यादुलूखलः । यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृक्षजौ" इति । कूर्चो बाहुमात्रः पीठाकारः । इडापात्री अरत्निमात्री मध्यसङ्गृहीता । तथैव द्वितीया हविर्धारणी पात्री अतिविपुला । पिष्टपात्रीति सैवोच्यते । पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा, अर्थात्षडङ्गुलपरिमण्डलखातवती "लोकाच्छेषस्य प्रतिपत्तिः" इति कठसूत्रात् । शम्या प्रादेशमात्री । प्रादेशमात्रं तीक्ष्णाङ्गुष्ठपर्वमात्रपृथुमुखं शृतावदानम् । अभ्रिररत्निमात्रस्तीक्ष्णमुखः । उपवे-षोऽरत्निमात्रः प्रादेशमात्रो वा हस्ताकृतिः । अन्तर्धानकटस्त्वर्धचन्द्राकारो द्वाद-शाङ्गुलः समाचारात् । प्राशित्रहरणस्य त्वाकारं वक्ष्यति (१–३–४०) षडवत्तं चोभयत्र खातवत् । आसनानि चारत्निमात्राणि प्रादेशमात्राणि वा प्रादेशमात्र-

पृथूनि । सर्वेषु पात्रेषु मूलाभिज्ञापकानि वृन्तानि कार्याणि । एतान्यहोमसंयुक्तत्वाद्वारणानि ।

अथ वैकङ्कतान्युच्यन्ते—यथा प्रकृतौ वैकङ्कती ध्रुवा, अग्निहोत्रहोमार्था स्रुगग्निहोत्रहवणीसंज्ञा, अग्निहोत्रहोमार्थः स्रुवश्च, सोमयागे ग्रहचमसद्रोणकलशादीनि च; तत्रापि हविर्धानाधिषवणफलकपारिप्लवासम्भरण्यादीन्यहोमसंयुक्तानि वारणान्येव, षोडशिपात्रं खादिरम्, अंश्वदाभ्यग्रहणपात्रमौदुम्बरं वचनात् (१२-५-६), वाजपेये सप्तदशसोमग्रहाः सप्तदशसुराग्रहाश्च तेषां पात्राणि वारणान्यहोमसंयुक्तत्वात्, सप्तदशसुराग्रहाणां पात्राणि मृण्मयान्यपि शाखान्तरसूत्रेषूक्तानि सन्ति, एवमादिसर्वमूहनीयम् ॥

परिभाषायाः साधारणत्वादावसथ्यपात्राण्यप्यहोमसंयुक्तानि वारणान्येव, प्रणीताप्रोक्षणीपात्रदर्वीकङ्कतादीनि ।

यज्ञपार्श्वे (९८-१०२) "चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः । त्र्यङ्गुलस्तु भवेत्स्कन्धो विस्तारश्चतुरङ्गुलः । विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः । अन्येभ्यो वापि वा कार्यास्तेषां दण्डेषु लक्षणम् । होतुर्मण्डल एव स्याद्ब्रह्मणश्चतुरस्रकः । उद्गातॄणां त्वरत्निः स्याद्यजमानः पृथुः स्मृतः । प्रशास्त्रवतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः । पोतुरग्रे विशाखी स्यान्नेष्टुः स्याद्विगृहीतृकः । अच्छावाकस्य रास्नाव आग्नीध्रस्य मयूखकः । इत्येते चमसाः प्रोक्ता ऋत्विजां यज्ञकर्मणि । पालशाद्वा वटाद्वान्यवृक्षाद्वा चमसाः स्मृताः" इति ।

स्मृत्यर्थसारे—"समित्पवित्रं वेदं च मुसलोलूखलं ग्रहान् । नाभ्युखासन्द्युपरवाञ्छम्या स्रुक्पुष्कराणि च । शाखास्वरुविषाणानि चरूणां मेक्षणानि च । कुर्यात्प्रादेशमात्राणि महावीरास्त्रयस्तथा । द्रोणकलशाधिषवणफलके स्रुग्दण्डपरिधिशूलानि स्फ्यशूर्पोपवेषेध्मानपि प्रणयनीयावपाश्रपण्यौ कुर्यादरत्निमात्राणि" इति ।

निगमे—"नैयग्रोधाश्चमसाश्चतुरस्राः प्रस्थोदकग्राहिणस्त्वग्बिला दण्डलक्षणाः । परिमण्डलश्चतुस्त्र्यस्त्र्यभिः पृथुरवतष्टोत्तष्टविशाखविगृहीतरास्नावमयूखक्रिया होतृब्रह्मसामगस्वामिप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां द्रोणकलशः पलशतग्राही परिप्लवाकृतिः स्थाल्यर्धशतिकैकधनास्त्रिंशतिका ग्रहाः पञ्चपलिकाः पुष्करा ग्रावाणो हस्तपर्णमात्राः जानुमात्रमुलूखलं पालाशं, पञ्च-

विंशतिपलमिडापात्रं, मुसलं खादिरं त्र्यरत्नि, दृषदरत्निप्रमाणा, शूर्पं शम्याद-र्वीशूलशङ्कवोऽधिषवणमसिशाखेध्मा धृष्टिः सावभ्रिरधरारणिः परशुश्चेति, पवित्रं सत उत्तरारणिर्वेदो मेक्षणं पैतुदारवाः शरावं प्राशित्रहरणं शृतावदानं स्वरूप-वेपसमिधश्चेति प्रादेशमात्राणि, सतप्रणयनचमसौ प्रास्थिकौ वितस्तिप्रमाणं पद-प्रमाणमि"ति ।

मण्डनः—रौहीतकान्यग्रोधोत्थान्पालाशान्वा कठश्रुतेः । कुर्वीत चमसां-स्तेषामभावेन्यद्रुमोद्भवान् । आश्वत्थं वारणं नो चेदिडापात्रमिहान्यजम् । अग्नि-होत्रहवण्यत्र ग्राह्या वैकङ्कती शुभा । पालाशी तु कठश्रुत्या द्वयाभावेन्यवृक्षजा" इति ।

आपस्तम्वः—"खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवै-तेषां वृक्षाणामेकस्य स्रुचः कारयेद्वाहुमात्र्योऽरत्निमात्र्यो वाग्राग्रास्त्वक्तोविला हंसमुख्यः स्फ्यः शम्या प्राशित्रहरणमिति खादिराणि वारणान्यहोमार्थानि भवन्ति" इति ।

मानवे—खादिरं स्फ्यं स्रुवं पालाशी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा मूल-तोऽरत्निमात्रदण्डाः पाणितलमात्रपुष्कराः स्रुचोविला द्र्यङ्गुलखाताश्चतुरङ्गुलोच्छ्रयाः प्रादेशमात्राणि प्रस्रवणानि" इति ।

काठके—"अरत्निमात्री स्रुगग्निहोत्रहवणी पालाशी सामान्यतया निर्व-पणमितरासां वाहुमात्राः स्रुग्दण्डाः प्रहस्तमात्राणि प्रस्रवणान्यर्थपरिमाणानि पात्राणि पालाशी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवा शमीभूर्जमय्यो वा वक्तौविला हंसमुख्यो भवन्ती"ति श्रुतिर्नैयग्रोधाश्चमसा रौहीतका वा सर्वाणि वा पर्णमयानि स्फ्यस्रुवशम्यं खादिरं प्राशित्रहरणं च यद्वा यज्ञियानां पात्रीडाचमसं लोकच्छिशेषस्य प्रतिपत्तिः" इति ॥ ३६ ॥

**वाहुमात्र्यः स्रुचः पाणिपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्ति ॥ १ । ४ । ३७ ॥**

वाहुः प्रमाणमासां ता वाहुमात्र्यः वाहुप्रमाणाः स्रुचः भवन्ति । तथा पाणिः प्रमाणमस्य तत्पाणिमात्रं पुष्करं मुखं यासां ताः पाणिमात्रपुष्कराः स्रुचः भवन्ति । तथा त्वग्बिलाः त्वक्प्रवेशो विलं मुखं यासां तास्त्वग्बिलाः । तथा

हंसमुखप्रसेकाः प्रसिच्यते क्षार्यतेऽनेनेति प्रसेकः प्रणालिका हंसमुखसदृशः प्रसेकः प्रणालिका यासां ताः हंसमुखप्रसेकाः। सा च प्रणालिका एकैव भवति। एकयापि शास्त्रार्थस्य कृतत्वात् कार्यसिद्धेश्च । न तु द्वे तिस्रो वा, कुत्राप्यनुक्तत्वात् । तथा मूलदण्डा मूले दण्डो यासां ता मूलदण्डाः, । अर्थादग्रे पुष्करं सिध्यति । पूर्वविधाः स्रुचो भवन्ति। शाखान्तरीयो विशेषः पूर्वसूत्र उक्तः ॥३७॥

## अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः॥ १ । ३ । ३८ ॥

अरत्निः प्रमाणमस्यासावरत्निमात्रः स्रुवोऽरत्निप्रमाणो भवति । पुनः कीदृशः अङ्गुष्ठपर्ववृत्तपुष्करः, अङ्गुष्ठपर्वणो वृत्तमङ्गुष्ठपर्ववृत्तम्, अङ्गुष्ठपर्ववृत्तं प्रमाणं वृत्तं पुष्करं मुखं यस्यासावङ्गुष्ठपर्ववृत्तपुष्करः। पर्वशब्दः सन्धिवाची सन्धिग्रन्थिः।

तदुक्तम्—"अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते । तत्र तत्र बृहत्पर्व ग्रन्थिभिर्मिनुयाद्बुधः" इति । अतोऽङ्गुष्ठस्य बृहत्पर्वग्रन्थिप्रमाणं चतुरस्रं कृत्वा तदेव मण्डलं चतुरस्रं चिकीर्षन्नित्युपायेन वृत्तं विधाय तत्प्रमाणं स्रुवस्य पुष्करम्। नासिकावत्खातं च स्यात् ।

तदुक्तं—कात्यायनेन (कर्मप्रदीपे ८–१३) "स्रुवाग्रे घ्राणवत्खातम्" इति । तथा "पुष्कार्धं भवेत्खातः" इति च ॥ ३८ ॥

## स्फ्योऽस्याकृतिः ॥ १ ३ । ३९ ॥

असिः खड्गः असेरिव आकृतिर्यस्य, असावस्याकृतिः । खड्गसदृशः स्फ्यो-वज्रो भवतीत्यर्थः ॥ ३९ ॥

## आदर्शाकृति प्राशित्रहरणम् ॥ १ । ३ । ४० ॥

प्राशित्रमिति ब्रह्मणो भागावदानम्, तत् ह्रियते येन तत्प्राशित्रहरणम् । आदर्शो दर्पणः । आदर्शस्येवाकृतिराकारो यस्य तदादर्शाकृति, आदर्शसदृशं वर्तुलम् । तत्रावदानविधानाच्च खातवत्प्राशित्रहरणं भवति ॥ ४० ॥

## चमसाकृति वा ॥ १ । ३ । ४१ ॥

चमसस्येवाकृतिराकारो यस्य तच्चमसाकृति । वा विकल्पे । अथवा चमससदृशं चतुरस्रं प्राशित्रहरणं भवति ॥ ४१ ॥

**चात्वालोत्करावन्तरेण सञ्चरः ॥ १ । ३ । ४२ ॥**

सञ्चरन्त्यनेनेति सञ्चरः, गमनागमनमार्गः। चात्वालश्च उत्करश्च चात्वालोत्करौ, तौ अन्तरेण तयोरन्तरालेन सर्वेषां विहितकार्यार्थं सञ्चरः, गमनागमनमार्गो भवति। अयं च सोत्तरवेदिकेषु वरुणप्रधासमहाहविःपशुसोमेषु ज्ञेयः। चात्वालस्यैष्वेव सत्त्वात् अतः सोत्तरवेदिकेषु सर्वैरनेनैव मार्गेण गमनागमने कार्ये॥ ४२॥

**प्रणीतोत्करावीष्टिषु ॥ १ । ३ । ४३ ॥**

अन्तरेण सञ्चर इत्यनुवर्तते। इष्टिषु दर्शपूर्णमासादिषु प्रणीतोत्करावन्तरेण प्रणीतोत्करयोरन्तरालेन सर्वेषां विहितकार्यार्थं सञ्चरः, गमनागमनमार्गो भवति।

अन्तरेणेत्ययं निपातोऽन्तरालशब्दार्थे। तद्योगे चात्वालोत्करौ प्रणीतोत्कराविति च द्वितीया "अन्तरान्तरेण युक्ते" इति (पाणि. २-३-४) सूत्रात् ॥ ४३ ॥

॥ इति तृतीया कण्डिका ॥

**( प्रतिनिधिप्रकरणम् )**

अथेदं चिन्त्यते व्रीहिभिर्यजेत यवैर्यजेतेत्यादिभिर्वाक्यैः श्रुतौ ये व्रीहियवादयो विधीयन्ते, यदि दैवान्मानुषाद्वा कारणात्ते यागार्थं न लभ्यन्ते, तदा किं द्रव्यान्तरेण प्रतिनिधिभूतेन तत्कर्मारम्भणीयमुत नेति। तत्र यागस्य प्रधानत्वाद्द्रव्यस्य च गुणभूतत्वाद्द्रव्यान्तरेण कर्मारम्भे प्राप्त आह—

**चोदिताऽनारम्भस्तत्सिद्धित्वात्तस्य ॥ १ । ४ । १ ॥**

चोदितस्य विहितस्य श्रुतस्य व्रीहियवादेर्मुख्यद्रव्यस्याभावे अलाभे अप्राप्तौ सत्यां काम्यस्य कर्मणोऽनारम्भोऽप्रयोग एव भवति। कुतः? तत्सिद्धत्वात्। तेनैव सिद्धि तस्य भावस्तत्सिद्धित्वं तस्मात्, तस्य काम्यस्य कर्मणस्तत्सिद्धित्वात्। यतः काम्यं कर्म तत्सिद्धि तेन श्रुतेनैव चोदितेनैव सिद्ध्यति नान्येन। यतस्तदेव तस्य साधनत्वेन श्रुतं न द्रव्यान्तरम्। अतो यदि द्रव्यान्तरेण तत्कर्मारभ्यते तदा कर्मणो यागरूपस्य तदेकसाधनकत्वाद्द्रव्यान्यत्वे सति यथाश्रुतद्रव्यहान्या कर्मणो विगुणत्वमेव स्यात्। न च विगुणात्काम्यात्किञ्चित्फलं भवति विनष्टशक्तित्वाद्दग्धबीजवत्। न हि काम्यस्यावश्यकर्तव्यत्वं केनचित्प्रमाणेन सिद्धं यद्बलेन यथाशक्ति प्रयोगं दृढीकृत्य द्रव्यान्तरेणारभ्येत। तस्माच्चो-

दितद्रव्यस्याभावे काम्यस्यानारम्भ एव भवति । अग्रिमेण सूत्रेण नित्ये कर्मणि विशेषस्य वक्ष्यमाणत्वादिदं काम्यविषयम् ॥ १ ॥

अथ यथाविहितद्रव्याभावे द्रव्यान्तरेणानारम्भे प्राप्त आह—

( नित्ये कर्मणि प्रतिनिधिविचारः )

## नियते सामान्यतः प्रतिनिधिः स्यात् ॥ १ । ४ । २ ॥

यथाशक्ति प्रयोगस्य स्थापितत्वान्नित्ये कर्मणि दर्शपूर्णमासादौ श्रुतद्रव्याभावे सामान्यतो मुख्यद्रव्यसादृश्यात्प्रतिनिधिर्भवति, श्रुतद्रव्यसदृशेन द्रव्यान्तरेणापि नित्यं कर्मारम्भणीयम् । यावज्जीवं चोदनया हि अनारब्धमपि नित्यमवश्यं कर्तव्यमिति नियमश्चोद्यत एव । तत्र यागप्रधानचोदना नियमेन यत्किञ्चिदर्थाद्द्रव्यमाकाङ्क्षति, सा च 'व्रीहिभिर्यजेते'ति श्रुतैर्व्रीहिभिर्विद्यमानैरेकवाक्यतां प्रतिपद्यमानार्थप्राप्तानि द्रव्यान्तराणि बाधते, श्रुतद्रव्याभावे तथा द्रव्यान्तराणामर्थप्राप्तिः केन वार्यते? तस्माद्द्रव्यान्तरं प्रतिनिधेयम् । यदि ह्याग्नेये चोदना न स्वयं द्रव्यं प्रयुञ्जीत व्रीहिवाक्यमेव तु तस्य प्रयोजकं स्यात्, ततस्तदभावे न द्रव्यान्तरमुपादीयेत, न चैतदस्ति, प्रधानचोदनैव प्रयुज्यमानेषु द्रव्येषु नियममात्रं व्रीहिवाक्येन क्रियते, अतस्तदभावेऽपि प्रधानमेवावश्यकत्वाद्द्रव्यान्तरमुपादापयतीति ।

ननु द्रव्यान्तरे कर्मभेदो भविष्यति ।

उच्यते न, न हि द्रव्यकर्मणोरभेदः । न च द्रव्यात्मकं कर्म येन तद्भेदाद्भेदः, जातेरिव व्यक्तिभेदे । न च द्रव्यान्तरेऽपि तावेव, दर्शपूर्णमासावित्यस्य प्रत्यक्षावगमस्य बाधोऽस्ति । कुतः ? शब्दान्तरादीनां भेदकारणानामभावात् । न हि नीवारैः क्रियमाणस्य शब्दान्तरादिनिमित्तो भेदोऽवतरति, येन तदेवेदमिति प्रत्ययो बाध्यते, तस्मान्नीवारैरपि क्रियमाणयोर्दर्शपूर्णमासाभिधेयतास्त्येव । यथा नैव चैत्रीप्रयोगाद्वैशाखीप्रयोगो भिद्यते, तेनैव च भेदाभावेन तौ दर्शपूर्णमासाभिधेयतां न जहीतः, तथा सति सामान्यात्तत्तुल्यत्वान्नीवारैरपि क्रियमाणयोरस्त्येव तदभिधेयता स्वरूपाभेदात् । यथाऽऽश्रयभेदेऽपि गोत्वादिसामान्यस्याभेदात्तन्निमित्तं गवादिनामधेयं सर्वत्र वर्तते, तद्वाक्यभेदेऽपि कर्मभेदाभावात्तन्नामता न निवर्तते, तन्नामकाच्च फलमतो द्रव्यान्तरेऽप्यस्त्येव फलमिति, तथा यद्यपि देशादिभेदेऽपि भिन्ना एव कर्मव्यक्तयः सामान्यमेव तु

दर्शपूर्णमासाभिधेयं फलवत्, तथापि देशादिभेदवद्व्रीहियवभेदवच्च नीवारेष्वपि तत्सामान्यव्यक्तिरेका, अतः सिद्धं द्रव्यभेदेऽपि कर्मैकत्वम् ।

एवं द्रव्यभेदेऽपि कर्मैकत्वे सिद्ध इदं सन्दिह्यते—श्रुतद्रव्याभावेऽपि किं यत्किञ्चिद्विसदृशमपि प्रतिनिधित्वेन ग्राह्यम्, उत श्रुतसदृशमेवेति । तत्राष्टाकपालचोदना येन केनचिन्निर्वर्त्स्यते, तत्किं सदृशोपादानेन? न च व्रीहिसदृशत्वाद् व्रीहिफलं नीवाराः साधयन्तीति वाच्यम्, यदि तथा स्यात्तदा व्रीहिभिर्विकल्पेरन्नेकार्थत्वाद्यववत् । न चैतदिष्टम् । तेन सगुणासम्भवे विगुणोऽप्याग्नेयचोदनार्थः कर्तव्य इतिकृत्वा द्रव्यान्तरोपादानं तत्र च सदृशासदृशयोर्नास्ति विशेषः । तस्मान्न सदृशोपादानमित्येवं प्राप्ते ब्रूमः—

फलार्थिना यथाश्रुतं व्रीह्यादिद्रव्यकं कर्म प्रक्रान्तम्, तादृशस्यैव फलसाधनत्वेन श्रवणात्, तस्य व्रीह्यभावेऽङ्गहान्या फलाभावात्तदन्तस्योत्सर्गे प्राप्ते शिष्टाचारानुमितात्प्रारब्धेन यजेतैवेत्येवम्भूताद्वचनात्समाप्तिर्विधीयते, सा च समाप्तिर्यादृशः क्रतुः प्रक्रान्तस्तादृशस्य विधीयते नान्यादृशस्य । तत्र च प्रक्रान्ते क्रतौ व्रीह्याद्याकृतिर्यागसाधनं स्वाश्रयभूतं द्रव्यं परिच्छिन्दन्त्यङ्गतां प्रतिपद्यते, तथैव व्रीहिगता ये विशेषा दीर्घशूकत्वादयस्तान्परिच्छिनत्ति, तेऽपि च क्रियायाः साधनमेव। न ह्यव्याप्रियमाणेष्ववयवेष्ववयवी व्यापृतः सम्भवति, व्रीहिसोमादिषु च पेषणादिविधानादवयवानामेवाङ्गत्वम्, नावयविकत्वात्, जात्या च स्वाश्रयवत्तदवयवानामप्युपलक्षणसम्भवाद्व्यक्तिस्तदवयवाश्च सर्व एव क्रियाङ्गतया विधीयन्ते। तत्र यद्यपि नीवाराकृतिर्व्यक्तिश्च व्रीहिजातेर्व्यक्तेश्चान्या तथाप्यन्ये बहवो धर्मा व्रीहिसमानास्तेषु विद्यन्ते, अतः श्रुतैकदेशसम्पत्तये तेऽवश्यमुपादेयाः, नहि सम्भविनस्त्यागो युज्यते, ये तु असमाना नीवारगतास्तेऽनन्तरीयकत्वादुपादीयन्ते, न तूपादित्सया, तस्मात्तदुपादानमदोषः । अतो यदि सदृशं प्रतिनिधीयते ततस्तेषामवयवानां कियन्तो लभ्यन्ते, जातिमात्रमवयवान्तरं च परित्यक्तं भवति, असदृशोपादाने पुनः समस्तपरित्यागः स्यात्, अतो व्रीहिशास्त्रमपि यथासम्भवमुपपादयितुं सदृशोपादानम्, एवं च सुसदृशलाभे मन्दसदृशं नोपादेयम्, सुसदृशे बह्ववयवानुग्रहात् । तदाह त्रिकाण्डमण्डनः—

“ कार्यै रूपैस्तथा पर्णैः क्षीरैः पुष्पैः फलैरपि ।
गन्धै रसैः सदृग्ग्राह्यं पूर्वालाभे परं परम् ॥ ” इति ।

तस्मात्साधूक्तं सामान्यः प्रतिनिधिः स्यादिति ।

तदुक्तम् " यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥ " इति ।

अत एवं सिद्धम्—नित्ये कर्मण्यारब्धे च प्रतिनिधिर्भवति, अवश्यकर्तव्यतया यथाशक्तिप्रयोगस्य स्थापितत्वात् । काम्ये पुनरवश्यकर्तव्यत्वाभावादनारब्धे मुख्यद्रव्यालाभे आरम्भो न भवतीति प्रागुक्तम् ॥२॥

अथ काम्ये प्रारब्धे सति पश्चाच्छ्रुतद्रव्यस्य नाशदोषापहारालाभादौ जाते तस्य विगुणस्य फलसाधकत्वाभावस्य प्रागुक्तत्वात्प्रयोजनाभावेन काम्यं न समापनीयमिति प्राप्त आह—

( काम्ये विशेषः )

## आरम्भान्नियमः ॥ १ । ४ । ३ ॥

काम्येऽप्यारम्भादूर्ध्वं समाप्तेर्नियमोऽवश्यम्भावः । आरम्भादिति हेतौ पञ्चमी । तेनारम्भ एव समाप्तेः कारणम् । यत आरब्धमतोऽवश्यं समापनीयमेव । समाप्तिश्च मुख्याभावे प्रतिनिध्युपादानं विना न भवति । अतः काम्येऽपि आरब्धस्य समापनार्थं प्रतिनिधिर्भवत्येव । नित्येऽप्यवश्यकर्तव्यतैव प्रतिनिध्युपादाने कारणम् । सा चारब्धे काम्येऽप्यवशिष्टा । आरम्भस्तु काम्यस्य विहितद्रव्याभावे द्रव्यान्तरेण न भवत्येव, अनारब्धस्यावश्यकर्तव्यत्वाभावात् ॥३॥

## दोषश्चासमाप्तौ स्यात्सामान्यात् ॥ १ । ४ । ४ ॥

किञ्च प्रारब्धस्य काम्यस्यासमाप्तावसमापने दोषः स्यात् । कुतः ? सामान्यात्, आरब्धस्य काम्यस्यावश्यकर्तव्यता नित्येन समानत्वात् । यथा नित्यकर्मणामकरणे यथा शिष्टविगर्हणम्, एवं प्रारब्धानां काम्यानामसमापनेऽपीति । अतः शिष्टविगर्हणरूपाच्छिष्टाचारात्स्मृतिं स्मृतेश्च श्रुतिं कल्पयित्वा प्रक्रान्तं शास्त्रीयं कर्मावश्यं समापनीयम् ।

अपि च प्रक्रान्तस्यासमाप्तौ निन्दाप्रायश्चित्ते तैत्तिरीये श्रूयेते "देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत न तेन देवताभ्य आवृश्च्यते" इति । तस्मादप्यारब्धमवश्यं समापनीयम् । तदुक्तं जैमिनिना "प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वाद्" (६–२–१०) इति ॥४॥

## दर्शनाच्च ॥ १ । ४ । ५ ॥

श्रुतौ मुख्यद्रव्याभावे द्रव्यान्तरेण परिसमाप्तिदर्शनाच्चैवमवसीयते, यन्मुख्यद्रव्यस्याभावे द्रव्यान्तरं प्रतिनिधेयमिति । तद्यथा "यदि सोमं न विन्देत्पूतीकानाभिषुणुयाद्" इति, अत्र सोमेऽपहृते सोमाभावे सति तत्स्थानेपूतीकानामभिषवं विदधाना पूतीकैर्यागः समापनीय इत्यमुमर्थं दर्शयति ॥ ५ ॥

एवं दर्शन उक्ते दर्शनस्वरूपकथनपूर्वकमस्य दर्शनत्वमाक्षिपति—

## अन्यार्थं दर्शनं न पुनर्ग्रहणात् ॥ १ । ४ । ६ ॥

अन्यार्थं सत् दर्शनं भवति, तद्धि दर्शनं कथ्यते यदन्यविधिपरं सत् प्रसङ्गादन्यमर्थं ज्ञापयति, यथा "तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणतः" इत्यादि "गाथा गायति" (१३–४–२–८) इत्यन्तं वाक्यं गाथागानविधिपरं सदस्यामिष्टौ प्रयाजान्सिद्धान्दर्शयति ।

"यदि सोमं न विन्देत्" इतीदं तु तादृशं दर्शनं न भवति' कुतः, पुनर्ग्रहणात् सोमाभावे सति पुनर्द्रव्यान्तरस्य पूतीकलक्षणस्याप्राप्तस्य ग्रहणात् विधानात् । तथा हि "यदि सोमं न विन्देत्पूतीकानभिषुणुयायादि"ति किमियं सोमाभावे द्रव्यान्तरविधिः सोमाभावे पूतीकैर्यागं साधयेदिति सोम जातिवत्पूतीकजातेर्यागसाधनपरिच्छेदकत्वेन विधीयते, उत प्रतिनिधिनियमः, सोमाभावे सुसदृशेष्वीषत्सदृशेष्वपि प्राप्तेषु पूतीका नियम्यन्ते, यदा चैवन्तदा द्रव्यान्तरेण परिसमाप्तदर्शनं भवति । अधुनात्वेतदाक्षिपति, अत्र सोमेन यजेतेति सोम उत्पत्तिशिष्टः, अतः सोमानुरक्तस्यैव करणत्वात्तदसम्भवे करणत्वमेव हीयेतेति न प्रतिनिध्यपेक्षा । कुतः तन्नियमार्थता विधेः, दर्शपूर्णमासयोस्तु व्रीहीणामनुत्पत्तिशिष्टत्वान्नीवारैः कर्मस्वनूरूपस्य भेदो न भवति, तेन तत्र प्रतिनिधिर्युज्यते । किं च नियमार्थो विधिरित्येतदप्ययुक्तम् , न हि सोमस्य सुसदृशे द्रव्यान्तरे सतीषत्सदृशः पूतीकः पक्षेऽपि प्राप्तः, सुसदृशे हि बहवः श्रुतद्रव्यावयवाः सङ्गृह्यन्ते, अल्पास्त्वीषत्सदृशे, न च भूयोनुग्रहे सम्भवत्यल्पानुग्रहो युक्तः । तस्मादत्यन्त प्राप्त्यभावे विधीयमानाः पूतीका न नियमार्था भवन्तीति, तस्मात्सोमाभावे अप्राप्तानां पूतीकानां यागसाधनत्वेन विधिरिति साधूक्तम् , न पुनर्ग्रहणादिति ॥ ६ ॥

अथ सिद्धान्तमाह—

## अन्यार्थं पुनर्ग्रहणम् ॥ १ । ४ । ७ ॥

"पूतीकानभिषुणुया"दित्येतत्पुनर्ग्रहणमेवान्यार्थंपूतीकरूपप्रतिनिधिनियमा-

र्थमित्यर्थः, न तु अप्राप्तानां पूतीकानां विधानार्थम्, विचारस्यैतत्प्रयोजनम्, प्रतिनिधिनियमपक्षे पूतीकविनाशे सोमसदृशस्योपादानं द्रव्यान्तरविधाने तु पूतीकसदृशमुपादेयमिति। कथमन्यार्थमिति चेत्, उच्यते, प्रक्रान्तं कर्म तावदवश्यं समापनीयमेव, अतो द्रव्यान्तरोपादानं प्राप्नोत्येव। ननूक्तम् सोमस्योत्पत्तिशिष्टत्वान्न प्रतिनिध्यपेक्षेति, तत्रोच्यते, यजेतेत्येतत्पदं यत्किञ्चिद्द्रव्यमपेक्षमाणं सोमेनेति निराकाङ्क्षीक्रियते, यथाऽऽग्नेयोऽष्टाकपाल इति वाक्यं वाक्यान्तरेण व्रीहिभिर्यजेतेत्यनेन, पदान्तरवाक्यान्तरप्राप्तयोर्नैव कश्चिद्विशेषोऽस्ति, अपेक्षायास्तुल्यत्वात्, अतः तद्वत्प्रतिनिध्यपेक्षा भवत्येव। यच्चोक्तम्, सत्यपि प्रतिनिधा पूतीकानामीषत्सदृशत्वात्प्राप्तिर्नास्तीति, अभावविधिरेवायमिति, तत्रोच्यते, यत्कदाचिदपि न प्राप्नोति तद्विधीयते पूतीकास्तु कदाचित्प्राप्नुवन्ति, यदा मुख्यस्याभावात्, प्रतिनिधातव्यं किञ्चिदिति निरूप्यते, तस्यां वेलायां सर्वेषामेव सुसदृशानामीषत्सदृशानां चास्ति प्राप्तिरनियमेन, तत्र यावदेव न्यायेन सुसदृशं नियन्तुमुपक्रम्यते तावदेवेषत्सदृशः पूतीको बलीयसा वचनेन नियम्यते, तस्मादिदं 'पूतीकानभिषुणुयादि'त्येवं तत्पुनर्ग्रहणमन्यार्थं सत् पक्षे प्राप्तानां पूतीकानां नियमार्थं सत् प्रक्रान्तस्य कर्मणो मुख्यद्रव्यालाभे द्रव्यान्तरेण परिसमाप्तेर्दर्शनं भवत्येवेति सिद्धम्, अत साधूक्तम् अन्यार्थं पुनर्ग्रहणमिति; अन्यार्थत्वादर्शनं भवतीत्यभिप्रायः ॥७॥

अथेदं विचार्यते। सोमे "पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्ये"त्यस्मिन्व्रते किं प्रतिनिधिभवत्युत न भवतीति। तत्र पूर्वपक्षमाह—

( पयोव्रतादावपि प्रतिनिधिरस्ति )

## व्रते प्रसङ्गो न नियमशब्दात् ॥ १ । ४ । ८ ॥

व्रते पयोव्रतादौ प्रतिनिधेः प्रसङ्गो न भवति, प्रतिनिधिर्न भवतीत्यर्थः। कुतः नियमशब्दात्, नियमप्रतिपादकः शब्दो नियमशब्दः, एवकारः सोऽत्र श्रूयते "व्रतान्ह्येवास्यातोऽन्नं भवति" इति एवकारेण प्रतिनिधिरेव निवार्यते अन्यस्य निवारणीयस्याभावात् ॥

एवं पूर्वपक्षिते इदमेव सूत्रं सिद्धान्तपरतयापि व्याख्यायते।

व्रतेऽपि प्रतिनिधेः प्रसङ्गो भवति प्रतिनिधिभवत्येव, कुतः, न नियमशब्दात्, यतो नायं नियमशब्दः, न ह्ययं नियमं प्रतिपादयितुं शक्तः, यतोऽयमिष्ट-

शनस्तुत्यर्थः। "पुराकेशश्मश्रोर्वपनात् यत्कामयेत तदश्नीयात्" इतीष्टाशनं हि प्रकृत्यैतच्छ्रूयते "व्रतं ह्यं वास्यातोऽशनं भवति" इति। अतस्तत्संस्तव एवायम्--अतो न स्वार्थे प्रमाणमिति न प्रतिनिधिनिवारणाय प्रभवति, तस्माद् व्रतेऽपि प्रतिनिधिर्भवत्येव। अथ चैवं सूत्रयोजना नियमशब्दव्रते प्रतिनिधेरप्रसङ्ग इति युक्तं तन्नेति॥ ८॥

एवमप्रसङ्ग इत्याकार प्रश्लेषः कार्यः

अथेदं चिन्त्यते, विहितस्य द्रव्यस्याभावे द्रव्यान्तरे प्रतिनिधित्वेनोपात्ते छागाभावे मेषरूपे अनुवाचनप्रैषादौ किमूहं कृत्वा प्रतिनिहितद्रव्यशब्दस्य प्रयोगः कार्यः, अग्नीषोमाभ्यां मेषस्य वपाया इत्येवम्, उत विहितद्रव्यशब्दस्यैव अग्नीषोमाभ्यां छागस्येत्येवमेवेति (३-८-२-२६)। तत्र मन्त्रेण द्रव्यमभिधेयम्, न चानूहितः प्रतिनिहितं द्रव्यं शक्नोत्यभिधातुम्, तस्मादूहित्वा प्रतिनिहितद्रव्यवाचिशब्दस्य प्रयोगे प्राप्त आह,

(प्रतिनिहितद्रव्यस्य श्रुतद्रव्याभिधायकशब्देनैवाभिधानम्)

## शब्देऽविप्रतिपत्तिः॥ १। ४। ९॥

प्रतिनिधावुपात्तेऽपि विहितद्रव्यवाचिनि शब्दे अविप्रतिपत्तिरविपरिणामः अनूहो भवति, अग्नीषोमाभ्यां छागस्य वपाया इत्यनूहितमेव मेषेपि प्रयोज्यम्, न तु मेषस्येत्येवं विपरिणतरूपमित्यर्थः। कुतः? प्रतिनिधिः श्रुतद्रव्यबुद्ध्या गृह्यते न तु द्रव्यान्तरबुद्ध्या, अतश्छाग एवायमिति बुद्ध्या गृहीतत्वात्तच्छब्देनैवाभिधानम्। यद्यत्र मेषच्छागवत्साधनं भवेत्ततस्तत्प्रकाशकं मेषपदं प्रक्षिप्येत, न त्वेवम्; किंतर्हि, मेषगता ये छागांशास्त एवात्र साधनं ते च छागगता इव मेषगता अपि छागशब्देनैव प्रकाशयितुं शक्यन्तऽइत्यनूहेनैव प्रयोगः। यत्र तु द्रव्यान्तरं वचनेन विधीयते यथा "सरस्वतीं मेषीमि"ति (१३-२२-४) "ऐन्द्र मेषमि"ति "ऐन्द्र ऋषभः सारस्वतीं मेषीमि"ति तत्र द्रव्यान्तरबुद्धिर्भवति। तत्रोहोऽपि भवति। न चात्रैवंविधं किमपि वचनमस्ति, तस्माद्बहूनामवयवानां सामान्याच्छ्रुतद्रव्यमेवेदमिति बुद्ध्या मेषादिद्रव्यस्य छागादिप्रतिनिधित्वेनोपादानम्, तेन श्रुतद्रव्यशब्देनैवाभिधानं युक्तमिति साधूक्तम्, शब्देऽविप्रतिपत्तिरिति॥ ९॥

यत्र तु वचनेन द्रव्यान्तरं विधीयते तत्र ऊहो भवतीत्युक्तम् "तेन सोमाभावे पूतिकानभिषुणुयात्" इति पूतिकानां वाचनिकत्वादूहो भविष्यतीत्याशङ्क्याह—

[ पूतीकानां सोमशब्देनैवाभिधानम् ]

## सोमेन जात्यभावात् ॥ १ । ४ । १० ॥

सोमेनेति तृतीयैकवचनम्, सोमाभावे पूतीकेषूपात्तेषु सोमेनेति सोमशब्देनैव पूतीकानामभिधानं कर्तव्यम् अंशुरंशुष्टे देवसोमाप्यायतामित्येवम् ( ३, ४, ३, १८, ) न तु पूतीकाशब्देन ।

अथवा सोमे इति सप्तम्येकवचनम् नेति निषेधः,

सोमप्रतिनिधित्वेनोपात्तेषु अर्जुनश्येनहृतपूतीकादिषु सोमे सोमशब्दे ऊहो न भवति । कुतः ? जात्यभावात् जात्यन्तरबुद्ध्यभावात्, न ह्यत्र वचनेन द्रव्यान्तरं विधीयते, किं तर्हि, सोमाभावे यागस्यावश्यकर्तव्यत्वादनेकेषु सुसदृशेष्वीषत्सदृशेषु च प्राप्तेषु पूतीकादेर्नियमः क्रियते, तेनैन्द्रो मेष इतिवद्वाचनिकजात्यन्तरविधानाभावादत्राप्यूहो न भवतीति ॥ १० ॥

अथेदं विचार्यते—वरुणप्रघासेषु पशौ च श्रूयते "पृषदाज्यं गृह्णाति" (३,८,४,७,) तेनानुयाजेषु चरतीति च, प्रकृतौ चाज्यपदसंयुक्तनियमाः "सन्ति देवानाज्यपानावह स्वाहा देवानाज्यपान् (१,४,२,१७,) देवानामाज्यपानां प्रिया धामानि" (१,७,२,११,) "देवा आज्यपा आज्यमजुषन्ते"ति च, (१,३,१,१०) आज्यपशब्देनात्र प्रयाजानुयाजदेवता उच्यन्ते "प्रयाजानुयाजा वै देवा आज्यपा" ( १,४,२,१७, ) इति वाक्यशेषात्, अत्र च पृषदाज्येनानुयाजा इज्यन्ते, तदिह संशयः आज्यपशब्दे पृषदाज्यदधिपानित्येवमूहः अथवा दधिपानिति उत पृषदाज्यपानिति आहोस्विदविकारेणैवाज्यपानिति प्रयोगः, यद्युभयं हविस्ततः प्रथमः पक्षः, यदि दध्येव ततो द्वितीयः, यदि पृषदाज्यनामकं द्रव्यान्तरं हविस्ततस्तृतीयः, अथ त्वाज्यमेव हविः तस्य तु पृषत्वं चित्रता संस्कारमात्रम् तज्जननार्थं च दधि ततः सिद्धान्तः। तत्र "अथ पृषदाज्यं गृह्णाति द्वयं वा इद९ सर्पिश्चैव दधि चेति" ( ३,८,४,७, ) तुल्यवत्सङ्कीर्तनादुभयं हविः उभयमप्यनुष्ठानाङ्गत्वेन स्मर्तव्यम् तस्मादुभयोः प्रकाशनम्, अथवा शाखान्तरे द्विरुपस्तृणाति द्विरवद्यति सकृदभिघारयती"त्युपस्तरणाभिघारणवादाद्दधिसंस्कारार्थमाज्यम् दध्येव हविः, ततो दधिपानित्येवं वक्तव्यम्, नैतदुभयम्, ग्रहणे हि दध्याज्ययोस्तुल्यत्वं दध्नो वा प्राधान्यं गम्यते, यागेत्वाज्यमेव पृषत्तागुणकं करणत्वेन श्रुत्या विधीयते, नोभयम्, नापि दधि, यच्च यागद्रव्यम् तदर्थो ग्रहणसंस्कारः, तस्मा-

ग्रहणेऽप्याज्यमेव प्रधानम् , तस्य तु पृषतासम्पादनार्थं दधि गृह्यते, न स्वार्थेनानुपयोगित्वात् , तथाविधे तु दध्नि तुल्यनिर्देश उपस्तरणादिवादेन च प्राधान्यनिर्देशोऽर्थवादमात्रम् , तस्मादविकारः । अन्यस्त्वाह, दध्ना आज्येन च द्रव्यान्तरं निष्पद्यते, तस्य वाचकः पृषदाज्यशब्दः, तच्च हविः पृषदाज्येनानुयाजान्यजतीति, तस्मात्पृषदाज्यपानित्येवं वक्तव्यमिति प्राप्त आह—

( पृषदाज्यस्यापि आज्यशब्देनैवाभिधानम् )

## आज्ये चादर्शनात् ॥ १ । ४ । ११ ॥

अविप्रतिपत्तिरित्यनुवर्तते । पृषदाज्येनानुयाजान्यजतीति वाचनिके पृषदाज्ये सत्यपि आवाहनादि निगमेषु आज्ये आज्यशब्दे अविप्रतिपत्तिरविकारः, देवानाज्यपानित्येव वक्तव्यमित्यर्थः । कुतः ? अदर्शनात् , आज्यव्यतिरिक्तस्य द्रव्यान्तरस्यादर्शनात् , तथाहि स्याद्विकारो यदि पृषदाज्यशब्दः समुदायशक्त्या द्रव्यान्तरमभिधत्ते, न त्वेवमस्ति, पृषच्छब्दो लोके चित्रवचनः, पृषद्रज्जुः पृषन्मणिरिति तेन पृषदाज्येनेति चित्रेणाज्येनेत्यर्थः, तेन प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानम् , गुणश्च सम्पादयितुं दधि गृह्यते प्राधान्यनिर्देशोऽर्थवादमात्रम् , हविरेव च प्रकृतावपुलक्षितम् , न हविर्गुणः तस्मादधिकारेणाज्यपानिन्येव वक्तव्यमिति सिद्धान्तः ॥११॥ किं च,

## पशौ मन्त्रवर्णात् ॥ १ । ४ । १२ ॥

पशावेवोत्तमप्रयाजप्रैषे पठ्यते, " स्वाहा देवा आज्यपा " इति [२१, ४०,], वनस्पतिप्रैषेऽपि " देवानामाज्यपानां प्रियाधामानि " [२१,४६] इति स्विष्टकृत्प्रैषेऽपि " अयाड् देवानामाज्यपानाम्" [२१,४७,], इति तत्र नियमतः पृषदाज्येनैवानुयाजा इज्यन्ते, अत एव पशुसम्बन्धिनो मन्त्रवर्णाद्देवानाज्यपानित्यावाहनादि भवतीति गम्यते ॥१२॥ किं च,

## श्रुतेश्च ॥ १ । ४ । १३ ॥

एकवचनश्रुतेरप्यत्रैकस्यैव प्रधानं गम्यते नोभयोः, अथ, " पृषदाज्यं गृह्णाति " इति ( ३, ८, ४, ७ ) यदि चात्र दध्नोऽपि प्राधान्यं स्यात्तदा द्विवचनं श्रूयेत, न च श्रूयते, अत एकवचनश्रुतेरप्ययमेवार्थोऽवसीयते यदेकस्यैवात्र प्राधान्यमिति तच्चाज्यस्यैवेति प्राक्साधितम् ॥१३॥

अथेदं विचार्यते "व्रीहिभिर्यजेत" "यवैर्यजेत" इतिविकल्पेन विहितेषूभयेषु मध्ये एकेन व्रीहिद्रव्येण प्रारब्धे कर्मणि तस्य नाशदोपापहारादिके जाते पश्चाद्य-

दि व्रीहयो न प्राप्यन्ते तदा किं वैकल्पिकं द्रव्यान्तरं यवरूपमुपादेयम्, उत व्रीहिसदृशमिति । तत्र मुख्यद्रव्ये सति प्रतिनिध्युपादानस्यायुक्तत्वाद्यवानामुपादाने प्राप्ते सिद्धान्तमाह,—

(वैकल्पिकोपात्तद्रव्यापचारे प्रतिनिधेरेयोपानम्)

## विकल्पे प्रवृत्तं कर्मान्तरत्वात् ॥ १ । ४ । १४ ॥

विकल्पे सति यत्प्रवृत्तम् येन कर्मारब्धम् तदेव तस्मिन् प्रयोगे अङ्गम्, इतरद्वैकल्पिकान्तरमनङ्गम्, तेन व्रीहिभिः प्रयोगऽउपक्रान्ते तेषामपहारादौ अलाभे च व्रीहिसदृशं निवारादिकमुपादेयम्, न तु वैकल्पिका यवाः । कुतः ? कर्मान्तरत्वात्, यथारम्भं हि समापनीयम्, तत्र यदि व्रीहिभिः प्रारब्धस्तदा तस्मिन्प्रयोगे व्रीहय एवाङ्गम्, तेषु च विनष्टेषु साम्यात्तद्बुद्धयैव यदि निवारा गृह्यन्ते, तदेवेदं कर्मेति प्रतीतिर्भवति तेन व्रीहिसदृशमेवोपादेयम्, यवेषु पुनर्द्रव्यान्तरबुद्ध्योपादीयमानेषु व्रीहिभ्योऽन्यदेव द्रव्यमिति कर्मान्तरबुद्धिरुदेति साहश्याभावात्, तथा सति यथारम्भं समापनं च कृतं न भवति । एवं सर्ववैकल्पिकेषु यावदेकमनुपक्रान्तं तावत्सर्वेषां प्राप्तिः, तेषां मध्ये तु एकेन प्रयोगे प्रारब्धे तस्मिन्प्रयोगे तदेवं श्रुतं द्रव्यम्, द्रव्यान्तरं त्वश्रुतसममेव, तेन प्रारब्धप्रयोगस्य द्रव्यस्याभावे तत्सदृशमुपादेयम्, न तु वैकल्पिकमिति ॥

अथवैवं सूत्रयोजना । सोमेन जात्यभावादित्यतो ( १० ) नेत्यनुवर्तते । विकल्पे प्रवृत्तं यवादिकन्न प्रतिनिधेयम्, कुतः, कर्मान्तरत्वात्, यतस्तदुपादीयमानं द्रव्यान्तरबुद्ध्योपादीयमानत्वात्कर्मान्तरत्वमापादयति, तच्च नेष्यते यथारम्भसमापनस्योचितत्वात् द्रव्यान्तरे चोपात्ते तथा न स्यादिति । अतो व्रीह्याग्रयणानन्तरं प्राग्यवाग्रयणाद्भ्रान्त्या यवैर्यागे कृते तेषामश्रुत समत्वात्वात्पुनर्व्रीहिभिरेव यागोऽनुष्ठेयः ॥१४॥

अथैतद्विचार्यते ॥ व्रीह्यभावे प्रतिनिधित्वेन नीवारैः प्रयोगे प्रारब्धे नीवाराणामपहारादिनाऽभावे सति किं प्रतिनिधिभूतं नीवारसदृशमुपादेयम्, उत मुख्यद्रव्यं व्रीहिरूपं तत्सदृशं चेति । तत्र यथैव वैकल्पिकेष्वेकस्मिन्प्रवृत्ते तस्यैव तत्प्रयोगाङ्गत्वात्तदपचारे चैतत्सदृशमेवोपादेयम् वैकल्पिकान्तरं मुख्यमपि तत्प्रयोगानङ्गत्वान्नोपादीयते, तथैव प्रतिनिधौ प्रवृत्ते तस्यैव तस्मिन्प्रयोगेऽङ्गत्वात्तदपचारे तत्सदृशमेवोपादेयम्, न तु मुख्यं तत्सदृशं वा तस्यैतत्प्रयोगानङ्गत्वादिति प्राप्ते सिद्धान्तमाह,—

( प्रतिनिधिनाशे श्रुतसदृशस्योपादानम्, न प्रतिनिधिसदृशस्य )

## प्रतिनिधौ तत्कालात् ॥ १। ४। १५॥

प्रतिनिधिद्रव्ये नीवारादौ विनष्टे न प्रतिनिधिभूतनीवारादिसाम्येन प्रतिनिध्युपादानं किन्तु मुख्यद्रव्यमेव व्रीहिरूपमुपादेयम् सम्भवे, तदसम्भवे तु मुख्यसादृश्येन नीवारादिः प्रतिनिधिरुपादेयः, न तु प्रतिनिहितनीवारसादृश्येन । कुतः ? तत्कालात् । स कालो यस्यासौ तत्कालः, भावप्रधानो निर्देशः, प्रतिनिधेस्तत्कालत्वादित्यर्थः । यतः प्रतिनिधेः स एव कालो यो मुख्यद्रव्यस्याभावः, तेन प्रतिनिधौ नीवारे विनष्टे मुख्यस्य लाभे मुख्यमेव ग्राह्यम्, तदलाभे नीवारादिकं व्रीहिसदृशमेवेति, न तु कदाचिन्नीवारसदृशमित्यर्थः । न हि नीवाराणामङ्गत्वमस्ति, श्रुतिलिङ्गादिप्रमाणाभावात् । श्रुतद्रव्यसाधारणास्तु येऽवयवा नीवारगता दीर्घशूकसतुषत्वादयस्तु तदुपादित्सया प्रवर्तमानो नान्तरीयकतया नीवारानुपादत्ते, तस्मान्नीवारस्यानङ्गत्वाद्व्रीह्यवयवानामेवाङ्गत्वात्तत्सिद्ध्यर्थं सम्भवे व्रीहयोऽसम्भवे च तत्सदृशमुपादेयम्, न नीवारसदृशमिति सिद्धान्तः । वैकल्पिकान्तरं तु पूर्वाधिकरणे निराकृतमिति तदुपादानस्यात्र शङ्कैव नास्ति ॥

ननु यदि प्रमाणाभावान्नीवारादीनामनङ्गत्वम्, श्रुतिलक्षणस्य तु पूतीकादेरङ्गत्वात्तस्य प्रक्रान्तस्यापचारे तत्सदृशमेवोपादेयम्, न सोमसदृशमिति चेत्, न तु, श्रुतिरप्यत्र प्रतिनिधिनियमार्थै च, सत्यम्; तथाप्यस्त्यत्र कचिदाशङ्का सोमावयवानामन्यत्रापि सद्भावे सति पूतीकनियमादेवं विज्ञायते नूनं पूतीकांशोऽप्यस्यां वेलायां क्रियाङ्गमिति, इतरथा सोमावयवस्याङ्गत्वे तस्यान्यत्रापि सम्भवान्न पूतीका एवोपादेयेरन्, तत्र नियमविधिरुपरुध्येत, तस्मात्पूतीकस्याप्यङ्गत्वात्तदपचारे तत्सदृशमुपादेयम्, न सोमसदृशमिति ।

सिद्धान्तस्तु, सत्यम्, न सोमावयवमात्रमङ्गम्, किन्तु पूतीकावयवसहिताः सोमावयवाः, न तु तावता पूतीकावयवाः क्रियाङ्गं भवन्ति, प्रतिनिधिनियमव्याघातप्रसङ्गात्, किन्तु सोमावयवा एव क्रियाङ्गं पूतीकावयवसाहित्यन्तु तेषामेवाङ्गम्, मैत्रावरुणग्रहस्येव पयःसंसर्गः, ततः पूतीकापचारे द्वयसम्पादनार्थमुभयसदृशमुपादेयम्, न केवलं पूतीकसदृशम्, नापि केवलं सोमसदृशम्, उभयसदृशालाभे तु सोमावयवानां प्राधान्यात्तल्लिप्सया सोमसदृशमेवोपादेयम्, न पूतीकसदृशमिति । अतश्च मुख्यद्रव्यस्यात्यन्तालाभऽएव प्रतिनिधेः साध-

